A REFORMED SERIES OF ... T READERS

# READER III.

By Pandit K. L. V. Sastri.

# ॥ संस्कृततृतीयादर्शः ॥



PUBLISHED BY

R. SUBRAHMANYA VADHYAR,

BOOK-SELLER & PUBLISHER,

KALPATHI—PALGHAT.

1928



Price 10 As.] [मूल्यं १० आणकाः

A Reformed Series of Sanskrit Readers.

# READER III.

BY

Pandit K. L. V. Sastri,

*Mahopadhyaya, Siromani & Proficient in Indo-European Philology.*



# ॥ संस्कृततृतीयादर्शः ॥

महोपाध्याय—शिरोमणिबिरुदभाजा

के. एल्. व्यासरायशास्त्रिणा

विरचितः ।

PUBLISHED BY

R. SUBRAHMANYA VADHYAR

BOOK-SELLER & PUBLISHER

KALPATHI-PALGHAT.



1928.

# PUBLISHERS' NOTE.



We have immense pleasure in publicly acknowledging our grateful thanks to the lovers of Sanskrit learning who have evinced keen interest in our Reformed Series of Sanskrit Readers and to the Heads of various Institutions and Pandits who have graciously extended their patronage to our II Reader almost immediately after its publication. The high popularity, which the Readers published by us so far have been enjoying, has encouraged us to place before the public now the III Reader of the same Series.

It is unnecessary to point out that no pains have been spared to make the Reader as useful and attractive as possible. We earnestly hope, therefore, that this Reader also, will command the same appreciation and patronage of the Educated public as its predecessors.

# अनुक्रमणिका CONTENTS

॥ श्रीः ॥

# ॥ संस्कृततृतीयादर्शः ॥



## १. सरस्वती ।

---

शारदा शारदाम्भोज-
  वदना वदनाम्बुजे ।
सर्वदा सर्वदास्माकं
  सन्निधिं सन्निधिं क्रियात् ॥ १ ॥

सुरासुरासेवितपादपङ्कजा
करे विराजत्कमनीयपुस्तका ।
विरिञ्चिपत्नी कमलासनस्थिता
सरस्वती नृत्यतु वाचि मे सदा ॥ २ ॥

श्रीमच्चन्दनचर्चितोज्ज्वलवपुः शुक्लाम्बरा मल्लिका-
मालालालितकुन्तला प्रविलसन्मुक्तावलीशोभना ।
सर्वज्ञाननिधानपुस्तकधरा रुद्राक्षमालाङ्किता
वाग्देवी वदनाम्बुजे वसतु मे त्रैलोक्यमाता शुभा ॥

या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना ।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा पूजिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥

दोर्भिर्युक्ता चतुर्भिः स्फटिकमणिमयीमक्षमालां दधाना
हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण ।
भासा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमाना समाना
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥

---

# २. सगरः ।

---

आसीदयोध्यायां सूर्यवंशीयः सगरो नाम राजा । तस्य केशिनी सुमतिश्चेति द्वे भार्ये आस्ताम् । तयोः केशिन्यामसमञ्जाख्य एकः पुत्रः समजनि । सुमतिस्त्वेकं गर्भपिण्डमसूत । विदारिते च तस्मिन् पिण्डे षष्टिसहस्राणि पुत्रास्ततो विनिःसृताः । ते सर्वे शस्त्रविद्यायामश्वारोहणे त्रय्यामान्वीक्षिक्यां वार्तायां दण्डनीतौ च परं प्रावीण्यमुपगताः कालेन रूपयौवनशालिनः समवर्धन्त ।

तत्र यः केशिन्यास्तनयोऽसमञ्जः स दुर्मतिर्दुराचारः प्रजानामहितश्च सन्ततमेवासीत् । अतः स पित्रा राज्यान्निष्कासितः । अंशुमान् नाम तस्यात्मजस्तु साधुवृत्तः सुधांशुरिव प्रमोदं जनयन् प्रजानां प्रीतिपात्रमभूत् ।

धीरैः शूरैश्च बहुसङ्ख्यैः पुत्रैः परिवृतः स राजा परमानन्दमविन्दत । एकदा स महाराजो महता विभवेन शतं यज्ञान् कर्तुमुपाक्रमत । निर्वर्तिताश्च निर्विघ्नमेकोन-

शतं यागाः । आरब्धे च शततमे मखे सगरोऽयं शतमखो भूत्वा स्वकीयं पदमपहरेदिति भिया वासवः सद्य एव रक्षोरूपेणागत्य यज्ञियमश्वं हठादाकृष्य रसातलमनैषीत् ।

तदवेक्ष्य पर्याकुलः सगरस्तदन्वेषणाय षष्टिसहस्राणि पुत्रानादिदेश । ते च भुवं परिभ्रम्य तुरगमलभमानाः पातालं प्रविविक्षवः क्षितिमख्नानिषुः । सगरतनयैः खातानि गर्तान्येव सम्प्रति सागरत्वेन प्रथन्ते ।

तेनैव मार्गेण सगरपुत्राः पातालं प्रविश्य तत्र घोरे तपसि वर्तमानस्य महर्षेः कपिलस्यान्तिके चरन्तं स्वीयं यज्ञाश्वमद्राक्षुः । दृष्ट्वा चायमेवास्माकमश्वस्य हर्तेति भाषमाणास्ते खनित्रलाङ्गलधरास्तमभ्यधावन् । तदवलोक्य क्रुद्धो महर्षिस्तान् शापाग्निना भस्मसाच्चकार ।

ततः स्वतनयांश्चिरमनागतान् वीक्ष्य विषण्णो नरपतिस्तेषामन्वेषणाय नप्तारमंशुमन्तं प्राहिणोत् । स च भुवं भ्रमित्वा पातालं प्रविष्टः पथि गच्छन् यदृच्छया सगरतनयानां मातुलं खगेन्द्रमद्राक्षीत् । अप्राक्षीच्च तं

तेषां वृत्तान्तम् । कपिलेन भस्मीकृतान् सगरसुतान् यज्ञियमश्वं च खगेन्द्रस्तस्मै दर्शयामास ।

तदवलोक्य शोकाकुलं पितृव्याणां तर्पणाय सलिल-मन्वेष्टुं प्रवृत्तमंशुमन्तं खगेन्द्रोऽभ्यधात्— 'वत्स, कपिलरूपेणावतीर्णस्य भगवत एवायं व्यापारः । नात्र शोकः कार्यः । अपि चैतेषां लौकिकेनाम्भसा तर्पणं न युक्तम् । या खलु हिमवतो ज्येष्ठा पुत्री गङ्गा नाम तस्याः क्षितिमानीतायाः सलिलेन तर्पणीया एते महात्मानः । अतस्तुरङ्गममादाय निवर्तस्व' इति ।

तन्निशम्यांशुमांस्तुरगमानीय सगरायार्पयित्वा पितृव्याणां वृत्तान्तं खगेन्द्रस्य वचनं च तस्मै विज्ञापयामास । सगरश्च तच्छ्रुत्वा शोकापन्नोऽप्यारब्धं यज्ञं परिसमाप्य गङ्गाया आनयने परं यत्नमधात् । परन्तु स भग्नोद्यमः परितप्यमानः कालेन दिवमारुरोह ।

तदनु तद्वंशीयाः परमसाहसिका दिलीपादयो राजानः सुरधुनीं भुवमवतारयितुं यावज्जीवं प्रायतन्त । तेऽपि विफलोद्यमा अभूवन् ।



## ३. भगीरथः ।

अथ गच्छति काले तस्मिन्नेव वंशे भगीरथो नाम राजा जज्ञे । स च स्ववंशीयानां सगरात्मजानां दुःखान्तेन तप्यमानो राज्यधुरां सचिवेषु निक्षिप्य स्वर्गङ्गावतरणाय चिरमूर्ध्वबाहुर्मासाहारश्च भूत्वा घोरं तपोऽतप्यत ।

वर्षसहस्रान्ते च प्रीतो भगवान् पद्मयोनिस्तस्य पुरस्तादाविर्भूय—'राजन् इक्ष्वाकुकुलभूषामणे साहसिन्, प्रीतोऽस्मि वरं वृणीष्वेत्यवोचत् । भगीरथश्च प्राञ्जलिर्भगवन्तमुपस्थाय— 'भोः करुणानिधे परमेष्ठिन्, चिरात् खलु भस्मीभूता मे प्रपितामहा निरुदकाः क्रियन्ते । तेषां च तर्पणाय यथा भगवती व्योमगङ्गां भुवमानेतुं प्रभवेयं तथा मामनुगृहाण' इति प्रार्थयत ।

तच्छ्रुत्वा प्रीतः पद्मयोनिः—'राजन्, फलिष्यति ते मनोरथः । किन्तु गुरुवेगेन वेगेनावतरन्ती सा भुवं प्लावयिष्यति । तस्याश्च धारणाय न कश्चित् पशुपतेरन्यः क्षमते । तस्मात् तं शरणं व्रज' । इत्यावेद्यान्तर्हितः ।

ततो भगीरथः पशुपतेस्तोषणार्थमङ्गुष्ठाग्रेण तिष्ठन् निराहारो भूत्वा तीव्रं तपस्तेपे । संवत्सरान्ते च तस्य तपसा प्रीतः शङ्करः प्रादुर्भूय— 'राजन्, अलं तपसा । शिरसा धारयिष्यामि शैलराजसुतामहम्' इत्युक्त्वा तिरोदधे ।

इत्थं लब्धवरो भगीरथः पुष्करसरितं स्तुतिभिरुपातिष्ठत । तत्क्षणमेव मुखरयन्ती दिगन्तानि महती कापि सरिदाकाशात् पशुपतेः शिरसि पपात । महावेगा च सा तरसैव शिरसा गृहीत्वा परमेश्वरं रसातलं नेतुमुदयुङ्क्त । पशूनां पतिः कपर्दी च क्रुद्धस्तां जटया बबन्ध । तथा बद्धा च सा तत्रैव निश्चलाभूत् ।

ततः पश्चाद् भग्नमानसो भगीरथः पुनरपि तीव्रेण तपसा शङ्करमाराधयामास । तेन च प्रीतो भगवान् जटाबद्धां गङ्गां शनैर्बिन्दुसरः प्रति विससर्ज । विसृष्टायाश्च तस्याः सप्तधा भिन्नायाः काचिदेका शाखा महारथं भगीरथमनुगच्छन्ती प्रोवाह । महता वेगेन प्रवहन्ती सा जह्नुमहर्षेर्दीर्घसत्रमुपासीनस्य यज्ञवाटं प्लावयामास । स च कुपितस्तां चुलुकीचकार ।

अनन्तरं भगीरथो भग्नमनोरथोऽप्यारब्धस्य कर्मणः परित्यागमयुक्तमाकलयन् भूयोऽपि शान्तः सुमनस्को भूत्वा देवान् दध्यौ । तेन च प्रीताः सुमनसो देवाः सद्यः समेत्य जह्नुमहर्षिमसान्त्वयन् । स च तां श्रोत्राभ्यामुत्ससर्ज, अत एव गङ्गा जाह्नवीति व्यपदिश्यते ।

अथ गङ्गयानुगतो भगीरथः पातालं प्रविश्य तत्र भस्मचयरूपेणावस्थितान् सगरात्मजान् गङ्गासलिलेन तर्पयित्वा दिवमारोपयत् । कृतार्थं चात्मानं मेने । तद्-नु गङ्गापि भागीरथीति प्रथामवाप ।

प्रारब्धमुत्तमजना न परित्यजन्ति ।

## ४. गगनप्रासादः ।

आसीत् क्वचित् कश्चिदलसो भैक्ष्योपजीवी भूसुरः । स एकस्मिन् दिने कस्यचिद्विप्रस्य गृहे भोजनार्थं गतः । तत्र तेनैकस्मिन् मृण्मये पात्रे तैलदानमलभ्यत ।

तदादाय कृतभोजनः स ब्राह्मणः प्रहृष्टहृदयः सायं स्वगृहं प्रस्थितः । किञ्चिद्दूरं गच्छतस्तस्य सूर्योऽस्तं जगाम । अतः स रात्रौ गमनमशक्यं मन्वानो मार्गपरिसरे स्थितं किञ्चिद्वृक्षमाससाद । आसाद्य च तत्र बहिर्वेदिकायां तैलपात्रं पादमूले निधायाशेत ।

शयानश्च मनस्येवमचिन्तयत्— अहो अद्याहं धन्यो धनिकश्चास्मि संवृत्तः । श्वः प्रातरेव तैलमिदं विक्रीय

तल्लब्धेन धनेनैकामजां क्रेष्यामि । षड्भिश्च मासैः सा पञ्चषान् शावकान् प्रसोष्यते । ततस्तस्याः शावकानां च विक्रयेण भूरि द्रविणं लप्स्यते । तेन धनेनैकां गां क्रेष्यामि । वर्षेणैकेन तस्या अपि सन्ततिर्भविष्यति । तस्याः पयो दधि घृतं च विक्रीय प्रभूतं वित्तमुपार्जिष्यामि । गां वत्सं च ततो विक्रेष्ये । तेनापि महद्धनमवाप्स्यामि । तदनु भूयसीर्गाः क्रेष्यामि । तेनाहं धनाधिपः सम्पत्स्ये । पश्चान्महता मूल्येन तत्र तत्र बहून् भूभागान् परिक्रेष्ये ।

एवं क्रमेणाहं प्रभूतेन वित्तेन सम्पन्नो राजतुल्यः क्षेत्रपतिर्भवेयम् । ततः प्रस्तराद्याहृतैः स्तम्भैः सौवर्णैर्गवाक्षैरुपशोभमानं सप्तभूमिकोपेतमासेचनकमतिविचित्रं रम्यं हर्म्यं कारयिष्यामि । राजा च तदा सादरं मां समाजयिष्यति । स्वसुतां च मह्यं प्रदास्यन् स कृतानेकमङ्गलतिलकं [illegible] । तामहं साव-हेलं [illegible] । ततः परं वर्षान्तरे [illegible] मां [illegible] । तदा प्रासादे दूरीकृत्य [illegible] धैर्यमङ्गीकरिष्ये । [illegible] राजा तां मह्यं प्रदास्यति ।

निर्वृत्ते च विवाहे सा राजसुता सँल्लपितुकामा स्मेरमुखी मदन्तिकमागमिष्यति । अहं च तां नेत्रोपान्तेन धीरं विलोकयिष्यामि । यदि सा कदाचित् कुपिता किञ्चिदप्रियं वचो ब्रूयात् तदा तामेवं पादेन ताडयिष्यामीति चिन्तयन्नेव स ब्राह्मणः पादमाकृष्य बलवत् प्रजहार । तेन च पादप्रहारेण तत् तैलपात्रमधः पतित्वा तस्य मनोरथशतैः सह शतधा भग्नमभूत् ।

मनोरथानामगतिः नवाहाः ।

## ५. हरिणाः

हरिणाः केचिदश्वा इव प्रांशवः केचिदजा इव ह्रस्वाश्च । तेऽत्यन्तं भीरवः । तृणेऽपि चलति ते भयेन सत्वरं पलायन्ते । हरिणाः प्रायेण अरण्येषु शाद्वलेषु च प्रदेशेषु निवसन्ति । ऋषयः स्वमानाश्रमेष्वपत्यनिर्विशेषं पोषयन्ति ।

हरिणानां चरणाः कृशा असुन्दराश्च । अथापि ते



शीघ्रतरं धावितुं शक्नुवन्ति। तेषां लोचने कर्णान्तविस्तृते। हरिणीनां शृङ्गाणि न विद्यन्ते। हरिणानां शृङ्गाणि तु बहुशाखानि मनोहराणि च। इत्थं हरिणाश्चारुरूपा मृगाः। त एव कश्चिदात्मसौन्दर्येण गर्विता भवन्ति। तथा हि—

एणः कश्चन कदाचिज्जलं पिबन्नात्मनः प्रतिबिम्बं

जले ददर्श । दृष्ट्वा च मनस्यचिन्तयत्— 'अहो कियच्चारवो मे शृङ्गशाखाः! कथं रुचिरे मे नयने! कथं कोमलानि मेऽङ्गानि! यदि मे चरणा अपि पीवराः सुन्दराश्चाभविष्यंस्तर्हि न मां कोऽपि रूपेण जगत्यजेष्यत् । धिग्विधातारं यो मे चरणानसुन्दरान् व्यधित' इति ।

इत्थं विचिन्तयति तस्मिन्नकस्मात् कस्याप्यतिमहतः शबरसैन्यस्य कोलाहलध्वनिरश्रूयत । श्रुत्वा च तं हरिणः सहसा पलायत । पलायमानं तं दृष्ट्वा क्षिप्राः शबरा अन्वधावन् । द्रुतं धावन् हरिणः सुदूरमतिचक्राम । किन्त्वतिद्रुतं पलयमानस्य तस्य बहुशाखं शृङ्गं कस्यचित् तरोरधश्शाखायामलगत् । स च तस्मादात्मानं मोचयितुं नाशक्नोत् । पश्चाद्धावन्तः शबरास्तं शाखाबद्धमवलोक्य सामोदमुपजग्मुः ।

तद्दृष्ट्वा हरिणः स्वमनस्येवमचिन्तयत्— 'अहो बत, विधातुरविमृश्यकारिता यो मे शृङ्गं बहुशाखमस्राक्षीत् । हन्त, यन्मया सुन्दरत्वेन गृहीतं तदिदानीमसुन्दरं जातम् । यदि मे शृङ्गाणि नाभविष्यंस्तर्ह्यसुन्दरा अपि मे चरणाः सम्प्रति मामरक्षिष्यन्' इति । इत्थमालो-

त्वरयैव स हरिणः शबरैर्गृहीतो व्यापादितश्च ।

तस्माद् यत् कार्यकारि तदेव सौन्दर्यमस्माभिरभिलषणीयम् । कार्यविघातकं तु सौन्दर्यमस्माकं विनाशायैव भवति ।

---

## ६. बिडालः क्रोष्टा च ।

काश्चिद्बिडालः क्रोष्टा च
मैत्रीं कृत्वा परस्परम् ।
एकदा पर्वसमये
स्नातुं स्नानाय जग्मतुः ॥ १ ॥

वनमार्गेण गच्छन्तौ
परिश्रान्तकलेवरौ ।
कश्चिच्छायामुपाश्रित्य
सुस्थौ संलपतुर्मिथः ॥ २ ॥

क्रोष्टा बिडालमब्रूत
सखे वनमिदं खलु ।



यदि व्याधः समागच्छेत्
त्वयात्मा रक्ष्यते कथम् ? ॥ ३ ॥

कांस्कानुपायाञ्जानीषे ?
का विद्याः शिक्षितास्त्वया ? ।
इति पृष्टो बिडालस्तं
क्रोष्टारं प्रत्यवोचत ॥ ४ ॥

युक्तिरेका मयाधीता
न त्वन्या ज्ञायते मया ।

वृक्षमारुह्य जीवेयं
यदि व्याधः समापतेत् ॥ ५ ॥

तस्य तद्वचनं श्रुत्वा
विहमञ्जम्बुकोऽवदत् ।
सखे, त्वामनुशोचामि
तपस्वी त्वं विपत्स्यसे ॥ ६ ॥

मया पश्य विदग्धेन
युक्तयः शिक्षिताः शतम् ।
येन केनाप्युपायेन
रक्ष्यतात्मा मया कृतम् ॥ ७ ॥

द्वित्रानुपायानधुना
शिक्षये त्वां यदीहसे ।
ज्ञातव्या बहवो विद्याः
किञ्चिज्ज्ञत्वं भयावहम् ॥ ८ ॥

इति ब्रुवाणे गोमायौ
स्नेहार्द्रं सरसं वचः ।
अकस्मादागतस्तत्र
धनुरादाय लुब्धकः ॥ ९ ॥

तं विलोक्य स मार्जारो
व्याधेनालक्षितो द्रुतम् ।
भूरुहाग्रं समारुह्य
विटपान्तर्व्यलीयत ॥ १० ॥

लुब्धको जम्बुकं दृष्ट्वा
तस्यान्तिकमभिद्रुतः ।
इतिकर्तव्यतामूढः
क्रोष्टा व्यामोहमव्रजत् ॥ ११ ॥

शते युक्तिषु का योज्या
कतमा श्रेयसी भवेत् ।
किं नु धावामि किं युध्ये
किं जङ्गम्ये किमुत्प्लवे ॥ १२ ॥

किं शये मृतवद्भूमौ
किं नु वृक्षं समाश्रये ।
इत्थं विकल्पयन् क्रोष्टा
तस्थौ तत्रैव मोहितः ॥ १३ ॥

लुब्धको द्रुतमभ्येत्य
धनुषाहत्य जम्बुकम् ।

गृहीत्वा हर्षभरितो
न्यवर्तत गृहं प्रति ॥ १४ ॥

बालाः पश्यत बह्वीभि-
र्विद्याभिः किं प्रयोजनम् ? ।
सङ्गता कार्यकाले या
सैव विद्या प्रकीर्तिता ॥ १५ ॥

---

## ७. श्रीकण्ठः शितिकण्ठश्च ।

आस्तां कस्मिंश्चिदग्रहारे श्रीकण्ठ इति शितिकण्ठ इति च द्वौ सहाध्यायिनौ सखायौ । तयोः श्रीकण्ठो जन्मना धनिकः । शितिकण्ठस्त्वकिंचनः । श्रीकण्ठो रमणीयं सौधमधिवसति । प्रत्यहमश्वशकटेन पाठालयं गच्छति । शितिकण्ठस्तु पित्रा सहैकस्मिन् कुटीरे निवसति । तस्य माता बाल्य एव दिवं गता । स एक एव पुत्रः । अतो गृहकार्यमपि सर्वं तेनैव कर्तव्यमासीत् । अथापि स स्वकीयान् पाठान् पठन् क्लृप्ते समये विद्यालयं गत्वा सश्रद्धं विद्यामभ्यास्थत् ।

एकस्मिन्नहनि मध्याह्ने विश्रान्तिवेलायां श्रीकण्ठः शितिकण्ठश्च पाठालये किमपि किमपि सम्भाषमाणावास्ताम् । तत्प्रसङ्गाच्च श्रीकण्ठः शितिकण्ठमाह—'सखे, त्वमतीव दुर्गतोऽसि । भृशं त्वामनुशोचामि । किं न त्वं धनिको भवितुमिच्छसि । अहं पश्य सुखी वर्ते । मम गृहे द्वौ भृत्यौ स्तः । यद्यदाज्ञापयामि तत्सर्वं तौ कुरुतः । न किञ्चिदपि गृहे मे कर्तव्यमस्ति । त्वद्गृहे तु सर्वं कर्म त्वयैव क्रियते । नैकोऽपि भृत्यस्तवास्ति' इति ।

शितिकण्ठः— सखे, इदं तावदविमृश्योदीरितं त्वया । ममापि सन्त्यष्टौ भृत्याः । ते मद्वचनमनुवर्तन्ते ।

श्रीकण्ठः— सौम्य, त्वं सत्यवादीति सर्वे त्वां स्तुवन्ति । तस्यैव हेतोरुपाध्यायोऽपि त्वयि नितरां स्निह्यति । कथं त्वमद्य मिथ्यावादी संवृत्तः ?

शितिकण्ठः— सखे, नैव मया मिथ्योक्तम् । सत्यं सन्त्येव ममाष्टौ भृत्याः ।

श्रीकण्ठः— भद्र, त्वमकिञ्चन इति सर्वो जानाति । एकमपि भृत्यं भृतिदानेन नियोजयितुं न शक्त-

स्त्वम् । कथङ्कारमष्टौ भृत्यान् नियोक्ष्यसि? कथमिदं ते वचः श्रद्धातव्यम् ।

इदमनयोः सम्भाषणमुपाध्यायो भित्यन्तरितः शृण्वन्नासीत् । सोऽपि शितिकण्ठस्य वचनमसत्यं मन्यमानः सहसा सविभ्रममागत्य कुपित इव शितिकण्ठमब्रवीत्— 'अरे तवाष्टौ भृत्याः सन्तीत्यविश्वसनीयमिदं वचः । किमित्येवं मिथ्या भाषसे? किं न जानासि विनोदार्थमप्यसत्यं न वक्तव्यमिति?'।

शितिकण्ठः स्मयमानः प्राह— प्रसीदत्वाचार्यः । नैव मिथ्या भाषितं मया । सत्यमेव सन्ति ममाष्टौ भृत्याः । श्रीकण्ठस्य भृत्याः कदाचित् कार्यान्तरेण यत्र कुत्रापि गच्छेयुः । कदाचिदालस्येन कर्मापि न कुर्युः । मम भृत्यास्तु न तादृशाः । सततं ते ममाज्ञामनुपालयन्ति । न च ते मां विहाय क्षणमप्यन्यतो गच्छन्ति । तेभ्यो मया काकिण्यपि न दीयते ।

उपाध्यायः— वत्स, हृदयङ्गम उपन्यासः । ब्रूहि तावत् के ते तव भृत्याः ।

श्रीकण्ठः— साधु सखे, तेषां नामानि ब्रूष्व ।

शितिकण्ठः— आचार्य सत्यमुक्तं मया । मम सन्त्यष्टौ भृत्याः । ते च नामतः— मम द्वौ पादौ द्वौ हस्तौ द्वे नेत्रे द्वे श्रोत्रे च । अष्टावेते भृत्याः सविनयं मदुक्तमनुतिष्ठन्ति । यदाहं कुत्रचिज्जिगमिषामि तदा मम पादावाज्ञापयामि— 'तत्र मां नयतम्' इति । तौ च सत्वरमेव मां नयतः । एवं यदा किञ्चिद्वस्तु जिघृक्षे तदा मम हस्तौ यदा किञ्चिद्दिदृक्षे तदा नेत्रे यदा किमपि शुश्रूषे तदा श्रोत्रे चादिशामि । ते सत्वरमेव तत्तत्कार्यं कुर्वन्ति । नापेक्ष्यते द्विस्त्रिरुक्तिः । यद्यत् श्रीकण्ठस्य भृत्याः कुर्वन्ति तत्सर्वमेते कर्तुं प्रभवन्ति ।

श्रुत्वेदं वचनमुपाध्यायश्चमत्कृतः परं प्रसन्नः प्रत्यवोचत— वत्स, साधूक्तं त्वया । ईदृशा एव भृत्याः प्रशस्यन्ते । यावदिमानेव भृत्यानादरिष्यसे तावत् त्वं क्षेममवाप्स्यसि । प्रतिष्ठां च प्राप्स्यसि ।

---



## ८. भल्लूकः ।

---

भल्लूक आरण्यको जन्तुः । मन्ये, युष्माभिर्न भल्लूको दृष्टपूर्वः । तत्र पश्यत, तद्भल्लूकस्य चित्रम् । भल्लूकस्य शरीरं दीर्घैः कर्कशैश्च रोमभिर्व्याप्तम् । तस्याङ्गानि पीवराणि । पादेषु निशिताग्राः पञ्च नखाः सन्ति । अतस्ते सुतरां भयङ्करा जन्तवः ।

भल्लूका नानाजातीयाः सन्ति । केचिद्गौराः, अपरे केचिद्रक्ताः, इतरे केचित्कृष्णाश्च । अयमीदृशो वर्णभेदस्तन्निवासदेशीयां शीतोष्णास्थितिं निमित्तीकृत्य प्रवृत्तः ।

अस्माकं देशे प्रायेण कृष्णभल्लूका एवोपलभ्यन्ते । केचिद्भल्लूका मनुष्या इव द्वाभ्यां पादाभ्यां चलन्ति । तादृशास्ते वृक्षानारोढुं प्रभवन्ति ।

भल्लूकाः प्रायेण सस्याशिनः । कदाचित्ते मांसमप्यश्नन्ति । तेषां प्रधानभूत आहारः पुष्पाणि फलानि च । ते मधुपाने मद्यपाने चात्यन्तं लोलुपाः । यदि कुत्रचिद्वृक्षस्याग्रे मधुकोशं पश्यन्ति तर्हि ते तमधः पातयितुं सर्वप्रकारैर्यतन्ते । तमापातयित्वा न तस्माद्देशान्निर्गच्छन्ति । अपि चैते वल्मीकानि भञ्जयन्तस्तद्द्वारे मुखं निधाय तत्रत्यान् वर्म्रीन् नासिकया आकृष्य बहिरुच्छ्वसन्ति । इत्थं भल्लूकानां कर्माणि विनोदावहानि ।

भल्लूकान् बाल्ये गृहीत्वा जनाः शिक्षयन्ति । तथा शिक्षितास्ते श्वान इव मनुष्याणामाज्ञामनुसरन्ति । अशिक्षिता भल्लूकास्तु प्राधान्येन मनुष्यानेव हिंसन्ति । भल्लूकस्य गोचरे पतितो जनः सजीवो निवर्तेतत्यसम्भाव्यमेव ।

---

## ९. काष्ठविक्रेता कुठारश्च ।

कस्मिंश्चिद्ग्रामे कुठारैकजीवी कश्चित् काष्ठविक्रेताऽवर्तत। स प्रत्यहं कुठारच्छिन्नानि काष्ठानि विक्रीय तद्धनेन जीविकामकरोत् एकदा च कस्याश्चिदगाधाया नद्याः कूले काष्ठानि च्छिन्दतस्तस्य कुठारो हस्तात् स्रस्तः सहसा नद्यां पपात। स तत्रावतीर्य तं ग्रहीतुं नाशक्नोत्। परं तीरे स्थित उच्चैःकारं चक्रन्द।

तस्य करुणं क्रन्दनं श्रुत्वा भगवान् वरुणस्तस्य पुरस्तादाविर्भूय तं शोकस्य कारणमपृच्छत्। स च यथावृत्तमात्मनः कुठारस्य वृत्तान्तं विज्ञापयामास।

तदाकर्ण्य वरुणो जले निमज्य राजतमेकं कुठारमानीय तमप्राक्षीत्—'किमयं ते कुठारः?' इति। स प्रत्यवोचत्—'नायं मदीयः' इति। ततो वरुणः पुनरपि निमज्य सौवर्णमेकं कुठारमानीय तस्मा अदर्शयत्। 'नायमपि मदीयः' इति तेनाभ्यधायि।

तच्छ्रुत्वा भगवान् भूयोऽपि जले निमग्नस्तदीयमायसं कुठारमाहृत्य तस्मै ददौ। तल्लाभेन परं प्रमोदमुप-

गतः स काष्ठविक्रेता कृतज्ञतामाविष्कुर्वन् वरुणं बहुधा तुष्टाव । वरुणोऽपि तस्य सत्यवचसा प्रीतः सौवर्णराजतावुभावपि कुठारौ तस्मै दत्त्वा तिरोदधे ।

उदन्तमेनं तस्य प्रातिवेशिकः कश्चिदाकर्ण्य स्वयमपि हैमं कुठारं लब्धुमिच्छन् गृहादेकमायसं कुठारं गृहीत्वा तस्या एव नद्यास्तीरं जगाम । गत्वा च तत्र स्वीयं कुठारं नद्यां प्रक्षिप्योच्चैश्चुक्रोश ।

तन्निशम्य तत्राविर्भूतो वरुणः तस्य शोकहेतुं विज्ञाय नद्यां पतितः सद्य एव हैमं कुठारमानीय—'अप्ययं भवदीयः कुठारः ?' इत्यप्राक्षीत् । बलवता लोभेनाकृष्टः स पुरुषः— 'आम्, अयमेव मदीयः, मदीय एवायम्' इति ब्रुवन् तस्य हस्तात् तं बलादाक्रष्टुमयतिष्ट ।

भगवान् वरुणस्तं लोभाविष्टमनृतभाषिणं विनिन्दन् झडिति कुठारेण सह नद्यां निममज्ज । हैमं कुठारं लिप्समानस्य तस्य आयसः कुठारोऽपि नष्टः । अतोऽस्थाशया मिथ्या वदतो जनस्य स्थितोऽप्यर्थो विनश्यति ।

---



## १०. धौम्य उपमन्युश्च ।

धौम्यस्य महर्षेः शिष्य उपमन्युर्नाम । तं चोपाध्यायः प्रेषयामास— 'वत्स, उपमन्यो, गा रक्ष' इति । स उपाध्यायस्य वचनादरक्षद् गाः । सोऽहनि रक्षित्वा दिवसक्षये गृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे ।

तमुपाध्यायः पीवानमपश्यत् । अपृच्छच्चैनं— 'वत्स, उपमन्यो, केन वृत्तिं कल्पयसि ? भृशं पीवासि कथम् ?' इति । स उपाध्यायं प्रत्युवाच— 'भो भैक्ष्येण

वृत्तिं कल्पयामि' इति। तमुपाध्यायोऽब्रवीत्— 'मह्यमनिवेद्य भैक्ष्यं नोपयोक्तव्यम्' इति। स तथोक्तो भैक्ष्यं चरित्वोपाध्यायाय न्यवेदयत् । स तस्मादुपाध्यायः सर्वमेव भैक्ष्यमगृह्णात् ।

स तथा कृत्वा पुनररक्षत् गाः । अहनि रक्षित्वा निशामुखे गुरुकुलमागत्य गुरोरग्रतः स्थित्वा नमश्चक्रे । तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वोवाच— 'वत्स, उपमन्यो, सर्वमशेषतस्ते भैक्ष्यं गृह्णामि । केनेदानीं वृत्तिं कल्पयसि?' इति। स उपाध्यायं प्रत्युवाच— 'भगवते निवेद्य पूर्वम्, अपरं चरामि । तेन वृत्तिं कल्पयामि' इति। तमुपाध्याय उवाच— 'नैषा न्याय्या वृत्तिः। अन्येषां भैक्ष्योपजीविनां वृत्त्युपरोधं करोषि। एवं वर्तमानो लुब्धोऽसि' इति।

स तथेत्युक्त्वा गा अरक्षत् । रक्षित्वा च सायं गृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे । तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वा पुनरुवाच— 'वत्स, उपमन्यो, अहं ते सर्वं भैक्ष्यं गृह्णामि । न चापरं चरसि । पीवासि भृशम् । केनेदानीं वृत्तिं कल्पयसि?' इति । स एवमुक्तस्तमुपाध्यायं प्रत्युवाच— 'भो

एतासां गवां पयसा वृत्तिं कल्पयामि' इति। तमुवाचोपाध्यायः—'नैतन्न्याय्यं पय उपभोक्तुम्। भवतो मया नाभ्यनुज्ञातम्' इति।

स तथेति प्रतिज्ञाय गा रक्षित्वा पुनरुपाध्यायस्य गृहमेत्य गुरोरग्रतः स्थित्वा नमश्चक्रे। तमुपाध्यायः पीवानमेव दृष्ट्वोवाच—'वत्स, उपमन्यो, भैक्ष्यं नाश्नासि, नापरं चरसि। पयो न पिबसि। भृशं पीवरोऽसि। केनेदानीं वृत्तिं कल्पयसि?' इति। स उपाध्यायं प्रत्युवाच—'भोः फेनं पिबामि यमिमे वत्सा मातॄणां स्तनं पिबन्त उद्गिरन्ति' इति। तमुपाध्यायोऽब्रवीत्—'एते त्वदनुकम्पया गुणवन्तो वत्साः प्रभूततरं फेनमुद्गिरेयुः। तदेतेषामपि वत्सानां वृत्त्युपरोधं करोष्येवं वर्तमानः। फेनमपि त्वं न पातुमर्हसि'। इति।

स तथेति प्रतिश्रुत्य निराहारः पुनररक्षत् गाः। तथा प्रतिषिद्धो भैक्ष्यं नाश्नाति। नान्यच्चरति। पयो न पिबति। फेनं नोपयुङ्क्ते। स कदाचिदरण्ये क्षुधार्तोऽर्कपत्राण्यभक्षयत्। स तैरर्कपत्रैर्भक्षितैः क्षारतिक्तकटुरूक्षैः उपहतचक्षुरन्धो बभूव। ततः सोऽन्धश्चङ्क्रम्यमाणः कूपे पपात।

अथ तस्मिन्ननागच्छति सूर्ये चास्ताचलावलम्बिन्युपाध्यायः शिष्यानवोचत्— 'मयोपमन्युः सर्वतः प्रतिषिद्धः । स नियतं कुपितस्ततो नागच्छति चिरगतः । अतः सोऽन्वेष्टव्यः' इति । तत उपाध्यायः शिष्यैः सार्धमरण्यं गत्वा तस्याह्वानाय शब्दं चकार— 'भो उपमन्यो, क्वासि वत्स एहि' इति ।

स उपाध्यायस्याह्वानं श्रुत्वा प्रत्युवाचोच्चैः— 'अयमस्मि कूपे पतितोऽहम्' इति । तमपृच्छदुपाध्यायः— 'कथं त्वमस्मिन् कूपे पतितः' इति । स उपाध्यायमुवाच— 'अर्कपत्राणि भक्षयित्वा अन्धीभूतोऽस्मि । अतश्चङ्क्रम्यमाणः कूपे पतितः' इति । तमुपाध्याय उवाच— 'अश्विनौ स्तुहि । तौ देवभिषजौ त्वां चक्षुष्मन्तं कर्तारौ' इति ।

स एवमुक्त उपाध्यायेनोपमन्युः विविधैः स्तवैरश्विनौ तुष्टाव । तेन तुष्टावश्विनावाजग्मतुः । आहतुश्चैनं— 'प्रीतौ स्वः । एष तेऽपूपः । अशानैनम्' इति । स एवमुक्तः प्रत्युवाच— 'नानृतमवोचतां भगवन्तौ । नत्वहमेनमपूपं भक्षयितुमुत्सहे गुरवेऽनिवेद्य' इति ।

ततस्तमश्विनावब्रूताम्– ‘पूर्वं कदाचिद् भवत उपाध्यायेनाप्येवमेवाभिष्टुताभ्यामावाभ्यां तस्मा अपूपो दत्तः । सोऽपूप आवयोः पुरस्तात् तेनोपयुक्तो गुरवेऽनिवेद्य । त्वमपि तथैव कुरुष्व यथा कृतमुपाध्यायेन’ इति । एवमुक्तः प्रत्युवाच– ‘भो अश्विनौ नानृतमूचतुर्भवन्तौ । अथापि नोत्सहेऽहमनिवेद्य गुरवेऽपूपमुपयोक्तुम्’ इति ।

अश्विनावाहतुः—‘प्रीतौ स्वस्तवानया गुरुभक्त्या । त्वं चक्षुष्मान् भविष्यसि, श्रेयश्चावाप्स्यसि’ इति । स एवमुक्तोऽश्विभ्यां लब्धचक्षुः उपाध्यायसकाशमागत्याभ्यवादयत् । आह चैनमुपाध्यायः— ‘वत्स, उपमन्यो, यथाश्विनावाहतुस्तथा त्वं श्रेयोऽवाप्स्यसि । सर्वे च ते वेदाः प्रतिभास्यन्ति, सर्वाणि च धर्मशास्त्राणि’ इति ।

---

## ११. कालिदासस्य सूक्तयः ।

---

पुराणमित्येव न साधु सर्वं
    न चापि काव्यं नवमित्यवद्यम् ।

सन्तः परीक्ष्यान्यतरद्भजन्ते
मूढः परप्रत्ययनेयबुद्धिः ॥

ज्वलति चलितेन्धनोऽग्नि-
विप्रकृतः पन्नगः फणं कुरुते ।
प्रायः स्वं महिमानं
क्षोभात्प्रतिपद्यते जन्तुः ॥

लब्धास्पदोऽस्मीति विवादभीरो-
स्तितिक्षमाणस्य परेण निन्दाम् ।
यस्यागमः केवलजीविकायै
तं ज्ञानपण्यं वणिजं वदन्ति ॥

भवन्ति नम्रास्तरवः फलोद्गमै-
र्नवाम्बुभिर्दूरविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ॥

स्त्रीणामशिक्षितपटुत्वममानुषीषु
सन्दृश्यते किमुत याः प्रतिबोधवत्यः ।
प्रागन्तरिक्षगमनात् स्वमपत्यजात-
मन्यैर्द्विजैः परभृताः खलु पोषयन्ति ॥

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशङ्कते ।
अतः समीपे परिणेतुरिष्यते
प्रियाप्रिया वा प्रमदा स्वबन्धुभिः ॥

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥

## १२· पिता पुत्रो गर्दभश्च ।

---

जातु कश्चित् अकिञ्चनः स्थविरः पुत्रदारादीनां कृते वस्त्राणि क्रेतुमुपायान्तरमपश्यन् स्वीयं गर्दभं विपण्यां विक्रेतुमैहत । अथ स गर्दभमादाय पुत्रेण सह नगरीं प्रतस्थे । पुत्रं गर्दभं च पुरोभागे कृत्वा यावत् स किञ्चित् दूरं गच्छति तावत् कश्चित् पान्थ-स्तमवलोक्य— “हन्त ! वृद्धोऽयं बुद्धिशून्यो मध्या-ह्नसमये सन्तप्तपांसुपटलावृते पथि पद्भ्यां चरन् स्वकीयं



गर्दभमनारोपितभारं नयति । महच्चित्रमिदम्" इति त्रयमवोचत् । तदाकर्ण्य स वृद्धः स्वतनयं खरोपरि समारोप्य चलितः ।

अथ कश्चिदन्यः पुरुषो गर्दभमारुह्य गच्छन्तं तस्य तनयं वीक्ष्य— 'अरे दुष्टबटो, किमेतत्? तव स्थविरः पिता पादचारी गच्छति । त्वं च सानन्दं गर्दभेन चरसि । अपि त्वमेतदुचितं मन्यसे? नूनमयं कलिकालस्यैव महिमा । न किलाधुनातनाः मान्यान् मानयन्ति लोकाः । नैतादृशो दुराचारः पुराकाले दृष्टः । को हि मतिमानीदृशं कर्म कुर्वीत' इत्युच्चैरभाषत । तत्र-

शाम्य स वृद्धो गर्दभात् पुत्रमवरोप्य स्वयमारुरोह ।

अनन्तरं तौ कमपि ग्राममासाद्य त्वरया गच्छन्तावास्ताम् । तदा मार्गोपकण्ठे स्थितौ द्वौ पुमांसौ गर्दभस्थं वृद्धमवलोक्य समभाषेताम्— 'सखे, अपि नाम त्वया कुत्रचिदवलोकितमीदृशं कुत्सितं कर्म? यदयं जडो जरठः खरोपरि सुखमासीनः शिशुमात्मजं पादचारिणं नयति । अयं नाम दयालुः पुत्रवत्सलो जनकः । पश्यायमर्भकः प्रक्षीणगात्रः परिम्लानवक्त्रः पदात् पदमपि चलितुं न शक्नोति । अहो कथमस्य मनसि नोत्पद्यते कारुण्यम्' इति । वृद्धोऽपि तमुपालम्भमाकर्ण्य लज्जितः पुत्रमपि गर्दभस्योपरि निवेशयामास ।

ततस्तौ ग्रामस्य मध्यदेशं प्रापतुः । तत्र स्थितो ग्रामणीः स्थविरमवलोक्य— 'भो महाभाग, अप्ययं गर्दभस्त्वदीयः?' इत्यपृच्छत् । स्थविरः प्रत्यवोचत्— 'आम्, कः सन्देहः । ममैवायं गर्दभः । पञ्चभ्यो वर्षेभ्यः प्रागस्य माता मया क्रीता । तया सह तदीयोऽयं वत्सोऽपि लब्धः । स च मयैतावन्तं कालं परिपोषितो मदीय एव न त्वन्यदीयो भवितुमर्हति' इति ।

तच्छ्रुत्वा ग्रामणीरभाणीत्— 'महाभाग, तथा चेत् तर्हि युवयोर्द्वयोरारोहणेन प्रक्षीणसत्वं मुमूर्षुं तपस्विनमिमं गर्दभं दयया किञ्चिद्दूरं युवां वहतम्। अन्यथा महानधर्मः स्यात्' इति।

ततस्तौ द्वावप्यवरुह्य गर्दभस्य चरणान् दृढं बध्वा कमपि वेणुदण्डं तच्चरणान्तराले प्रवेश्य तं स्कन्धमारोप्य जग्मतुः। नातिदूरे ग्रामाद् बहिरासीत् कश्चित् सङ्क्रमीयः। यदा तौ गर्दभं वहन्तौ सङ्क्रमीयस्य मध्यभागं प्रापतुस्तदा तयोर्मूर्खतां निन्दन्तो जनाः सहस्ततालमुच्चैरहसिषुः। तेन भयाकुलो गर्दभः पादान् निरसितुमारभत। गर्दभस्य व्याकुलीभावेन भूयो ववृधे जनानां कलकलः। अथ स गर्दभो बलाद्गात्रविक्षेपं कुर्वन् नद्यामस्रत्। पितापुत्रावपि बलादाकृष्टौ दैवयोगान्नद्यामपतितौ कथमपि प्राणावशिष्टौ गृहं प्रति न्यवर्तेताम्।

सर्वथा स्वहितमाचरणीयं
किं करिष्यति जनो बहुजल्पः।
विद्यते न हि कश्चिदुपायः
सर्वलोकपरितोषकरो यः॥

# १३. पत्रिकालेखनम् ।

पिता—सत्यमूर्ते, चिरादिव चिन्तयन् दृश्यसे । किं कर्तुमुद्यतोऽसि ?

सत्यमूर्तिः—तात, भद्रपुरस्थाय मम सहाध्यायिने सत्यकीर्तये पत्रिकां लिखामि ।

पिता—जात, चिरात् खलु चिन्तयसि । अपि समाप्तो लेखः ?

सत्यमूर्तिः— तात, न समापितः ।

पिता— जात, आनय लेखं पश्यामि तावत् । (दृष्ट्वा) अरे किमिदम् । नैकमप्यक्षरमत्र लिखितम् ।

सत्यमूर्तिः— तात, अद्यैकां पत्रिकां लेखिष्यामीति मया तस्मै प्रतिज्ञातम् । सा कथं लेखनीयेति न ज्ञायते ।

पिता— भद्र, यदि सत्यकीर्तिस्तव सम्मुखेऽवर्तिष्यत तर्हि त्वं त्वदाशयं तस्मै विना क्लेशमवादिष्यः । किं न ?

सत्यमूर्तिः— ओं तात, भाषणं सुकरं लेखनं दुष्करम्।

पिता— अस्तु, को वा विषयः पत्रिकायां लेखनीयः? अहं ते लेखनप्रकारं शिक्षयामि ।

सत्यमूर्तिः— तस्य किल स्वसा संस्कृतं पठितुमिच्छति । तदर्थं सरला कापि संस्कृतपाठावलिः अत्र यत्र कुत्राप्यस्ति चेत् तदधिकृत्य लेखनीयमिति तेनाहमुक्तः । अयमेव विषयो लेखनीयः ।

पिता— भद्र, तेन सह साक्षात् सम्भाषणे यानि वाक्यान्यवदिष्यः तान्येव तत्र लिख ।

सत्यमूर्तिः— तात, केन प्रकारेण लेखस्योपक्रमः कर्तव्यः?

पिता—सौम्य, समीचीनस्ते प्रश्नः । कथयामि तावत्। सर्वोऽपि लेखः स्वस्तिशब्देनारब्धव्यः। ततः अमुकस्थानात् अमुकनामकः अमुकनामानं प्रणिपत्य विज्ञापयतीति लेखनीयम् ।

सत्यमूर्तिः— पितः, यदि कश्चिल्लेखः कनीयसे भ्रात्रे कनीयस्यै स्वस्रे वा प्रेष्यते कथं तत्र लेखनीयम्? न हि तत्र प्रणिपातो युज्यते ।

पिता— जात, साधु पृष्टम् । तत्र तावत् आयुष्मन्तं भ्रातरं आशीर्वचनपूर्वकं निवेदयतीति न्यसनीयम् । पुत्रादिभ्यः पत्रिकालेखनेऽप्ययमेव क्रमः । गुरुजनेभ्यः प्रेष्यमाणे लेखे तु विनयप्रकर्षं द्योतयितुं साष्टाङ्गपातं प्रणिपत्य सविनयं विज्ञापयतीति निवेशनीयम् ।

सत्यमूर्तिः—(सद्य एव लेखं लिखित्वा) तात, लिखितो लेखः । निरूपयतु भवान् ।

लेखः ॥

स्वस्ति । श्रीकल्पादिग्रामात् सत्यमूर्तिः प्रियसुहृदं सत्यकीर्तिशर्माणं प्रणिपत्य विज्ञापयति । सर्वे वयं कुशलिनः । शुश्रूषामहे च भवद्गतं कुशलम् ।

भवदुक्तरूपा काचिन्नूतना संस्कृतपाठावलिरचिरेणात्र प्रकाशिता वर्तते । सैषा 'आदर्शपाठावलिः' इति नाम्ना प्रथते । अस्यां पाठावल्यां बालादर्शादयः क्रमिकाः पञ्च आदर्शाः सन्ति । एते संस्कृतशालास्वाङ्गलशालासु च पठतां संस्कृतविद्यार्थिनामुपकाराय नवीनां

सरणिमनुरुध्य विरचिताः । त एते रमणीयैश्च तदनुगुणैः पाठैश्च सङ्घटिताः संस्कृताध्ययने बालकानां मनांस्यावर्जयन्ति । क्रमेणैतेषामादर्शानामभ्यसनेन बालकाः संस्कृतभाषायामनायासेन पाटवं सम्पादयितुं प्रभविष्यन्ति । भृशं चैतानभिनन्दन्ति सुधियः । ते चात्रत्ये गीर्वाणवाणीपुस्तकालये समासाद्यन्ते ।

अस्तु नमः सौहार्दाय ।

इति भवदीयं मित्रम्

सत्यमूर्तिः ।

---

## १४. धर्मगुप्तो भार्या च ।

आसीदुज्जयिन्यां धर्मगुप्तो नाम वैश्यः । तस्य भार्या दुश्शीला जल्पनशीला चावर्तत । यद्यद्भर्त्रा कृतं तत्सर्वं निन्दन्ती सा तस्य प्रतीपगामिनी बभूव । न केवलं भर्तारमेव किन्तु प्रातिवेशिकानपि सा कर्कशैर्वचनैरतिमात्रं तुतोद । धर्मगुप्तश्च तां दमयितुं बहुधा प्रायतत । तस्याश्चमं कियत्काठिनं, अङ्गं च कियद्दृढं,



इति परीक्षमाण इव तां भृशं ताडयामास । परन्तु तस्यायं समुद्यमस्तस्या जल्पनशीलतामवर्धयत् । अन्ततो धर्मगुप्तस्तस्या महाभार्याः सकाशात् कथञ्चिदात्मनो मोचनमैच्छत ।

एकस्मिन् दिवसे तावुभावपि केनापि कार्येण कस्याश्चिन्नद्यास्तीरमगच्छताम् । तत्र धर्मगुप्तः करुणस्वरेण भार्यामाह— 'अयि दयिते, यद्यनुजानासि तर्हि यथेतः परमावयोः कदापि कलहो न भविष्यति तथा करिष्यामि । येन त्वं सुखिता भविष्यसि । भार्यापृ-

च्छत्— 'कथमिव ?' । भर्ताब्रवीत्— 'अयि प्रिये, अद्याहमस्यां नद्यां निपत्य प्राणांस्त्यजामि । अतो मम हस्तौ पश्चाद्भागमाकृष्य दृढं बन्धुमर्हसि । अन्यथा हि मानुषतासुलभया जीविततृष्णया प्रत्याकृष्टो बाहुभ्यां प्लवमानः कदाचिदात्मनो रक्षणाय प्रयतेय । हस्तयो-र्बन्धनं तु नैतच्छक्यम् । प्रमीते च मयि तव जीवि-कार्थं मम जीवितान्ते लभ्यं धनं पर्याप्स्यति' इति ।

तस्य तद्वचनं श्रुत्वा सन्तोषस्य परां कोटिमारूढा सा झडिति तस्य हस्तौ पश्चादाकृष्य स्वकीयेन कर-वस्त्रेण गाढं बबन्ध । ततः सा— 'नूनमयमद्य म्रियते । न काचिदितः परमस्मान्मे पीडा विद्यते । विशृङ्खला करेणुरिव स्वैरं चरिष्यामि' इत्यचिन्तयत् । तथा चिन्त-यन्त्याश्च तस्या नेत्रयोः सन्तोषबाष्पः समजायत । सा तदानीं तं मृतमेव मेने ।

धर्मगुप्तो भार्यामाह— 'अयि प्रिये, आत्मवधो हि पापहेतुः प्रकृतिविरुद्धश्च । अतोऽहं नद्याः कूले तिष्ठा-मि । त्वं मां हस्तेनाहत्य नद्यां पातय' इति । तच्छ्रुत्वा सा तं बलात् प्रक्षेप्तुमिच्छन्ती उपविंशानि पदानि द्रुत-तरमधावत् । तस्मिन्नेव क्षणे स पुरुषः सहसा पार्श्व-

मागमपसृतः । रभसा गच्छन्ती च सा नद्यामपतत् । ततः सा 'हा प्रियतम, परित्रायस्व मां परित्रायस्व' इति वदन्ती भृशमक्रोशत् । तदानीं धर्मगुप्तः— 'हा प्रियतमे, किमेतदापतितम् । त्वया खलु मम हस्तौ सुदृढं बद्धौ । अन्यथेदानीं त्वामरक्षिष्यम् । किं करोमि मन्दभाग्यः' इति प्रत्यवोचत् ।

---

## १५. अयः ।

---

लोके तावत् सुवर्णं रजतं ताम्रं पित्तलं अयः सीसमित्येवंविधा बहवो लोहाः सन्ति । ते च तत्तदाकरेषु मृदा लोहान्तरेण वा व्यामिश्रा उपलभ्यन्ते, न तु शुद्धरूपाः । तादृशास्ते खनिभ्य उद्धृत्य संस्क्रियन्ते । संस्कृताश्च ते जनानामुपयोगाय कल्पन्ते । तेषां मध्येऽय एवात्यन्तमुपयुक्तो लोहः ।

अयस्तावद् भूम्यन्तर्भागे शिलाखण्डैः सह सम्मिश्रमासाद्यते । तानि च शिलाखण्डान्युत्खाय चूर्णपेषं पिष्ट्वा द्रवीकृत्य शुद्धमयः सम्पाद्यते । अत एवेदं 'अ-

अपस्मारः' इत्यभिधीयते । तच्च भूमण्डले सर्वत्र प्रभूततयाधिगम्यते । तस्मादस्य लोहस्य मूल्यमत्यल्पम् ।

अयसः प्रयोजनानीयत्तया निर्देष्टुमशक्यानि । यद्यपि सुवर्णादयो लोहा अप्यस्माकमुपयुक्ता एव तथापि तैर्विना वयं जीवितुं शक्नुयाम । अयसा विना त्वस्माकं लोकयात्रैव न स्यात् । कृषिं कर्तुं गृहादिकं निर्मातुं च न प्रभवेम ।

तथा ह्यस्माकं खननोपयुक्तानि खनित्रपिटकादीनि तक्षणोपयुक्तानि वृक्षादनादीनि व्रश्चनोपयुक्तानि परशुकुठारादीनि छेदनोपयुक्तानि क्षुरिकादीनि कर्तनोपयुक्तानि कर्तर्यादीनि चायसा क्रियन्ते । योऽयसा तत्तदुपकरणानि करोति सोऽयस्कार इत्युच्यते । अयस्कारोऽस्माकमुपयुक्तानि भर्जनकपालानि विविधान्यन्यानि च पात्राणि करोति ।

अपि चाद्यत्वे नानाविधानि यन्त्राण्ययसा निर्मीयन्ते । अयसोऽभावे वाष्पशकटादीनां कथैव न स्यात् । साम्प्रतिको नागरिकपरिष्कारः सर्वोऽप्ययोमूलकः । आयसैरुपकरणैर्विना सुवर्णकारादयोऽपि स्वस्वकर्माणि

कर्तुं न शक्नुवन्ति । इत्थमल्पमूल्योऽप्ययःपसारो जनानाममूल्यो लोहः ।

---

## १६. दारिद्र्यम् ।

हे दारिद्र्य, नमस्तुभ्यं
　　सिद्धोऽहं त्वत्प्रसादतः ।
पश्याम्यहं जगत्सर्वं
　　न मां पश्यति कश्चन ॥ १ ॥

दारिद्र्य, शोचामि भवन्तमेव-
　　मस्मच्छरीरे सुहृदित्युषित्वा ।
विपन्नदेहे मयि मन्दभाग्ये
　　समाश्रित चिन्ता क्व गमिष्यसीति ॥ २ ॥

एको हि दोषो गुणसन्निपाते
　　निमज्जतीत्येवमवर्णयद्यः ।
न तेन दृष्टं कविना समस्तं
　　दारिद्र्यमेकं गुणकोटिहारि ॥ ३ ॥



## १७. मृगः काको जम्बुकश्च ।

अस्ति मगधदेशे चम्पकवती नामारण्यानी । तस्यां चिरान्महता स्नेहेन मृगकाकौ निवसतः । स च मृगः स्वेच्छया भ्राम्यन् हृष्टपुष्टाङ्गः केनचिज्जम्बुकेनावलोकितः । तं दृष्ट्वा जम्बुकोऽचिन्तयत् — आः कथमेतन्मांसं सुललितं भक्षयामि । भवतु, विश्वासं तावदुत्पादयामि ।

इत्यालोच्योपगम्याब्रवीत्-- 'मित्र, कुशलं ते ?'। मृगेणोक्तम्-- 'कस्त्वम्'? स ब्रूते-- 'क्षुद्रबुद्धिनामा जम्बुकोऽहम्। अत्रारण्ये बन्धुहीनो मृतवन्निवसामि। इदानीं त्वां मित्रमासाद्य पुनः सबन्धुर्जीवलोकं प्रविष्टोऽस्मि। अधुना तवानुचरेण मया सर्वथा भवितव्यम्। मृगेणोक्तम्-- 'एवमस्तु'।

ततः पश्चादस्तं गते सवितरि तौ मृगस्य वासभूमिं गतौ तत्र चम्पकवृक्षशाखायां सुबुद्धिनामा काको मृगस्य चिरमित्रं निवसति। तौ दृष्ट्वा काकोऽवदत्-- 'सखे, चित्राङ्ग, कोऽयं द्वितीयः?' मृगो ब्रूते-- 'जम्बुकोऽयम्। अस्मत्सख्यमिच्छन्नागतः'। काको ब्रूते-- 'मित्र, अकस्मादागन्तुना सह मैत्री न युक्ता'।

तच्छ्रुत्वा जम्बुकः सकोपमाह-- 'मृगस्य प्रथमदर्शनदिने भवानप्यागन्तुरेवाभूत्। तत्कथं भवता सहैतस्य स्नेहानुवृत्तिरुत्तरोत्तरं वर्धते? यथायं मृगो मम बन्धुस्तथा भवानपि। मृगोऽब्रवीत्-- 'किमनेनोत्तरोत्तरेण? सर्वैरेकत्र विश्रम्भालापैः सुखिभिः स्थीयताम्'। काकेनोक्तम्-- 'एवमस्तु'।

अथ प्रातः सर्वे यथाभिमतदेशं गताः। एकदा

निभृतं शृगालो ब्रूते— 'सखे, चित्राङ्ग, अस्मिन् वनैकदेशे सस्यपूर्णं क्षेत्रमस्ति । तदहं त्वां नीत्वा दर्शयामि' । तथा कृते सति स मृगः प्रत्यहं तत्र गत्वा सस्यं खादति । अथ क्षेत्रपतिना तद्दृष्ट्वा पाशो नियोजितः । अनन्तरं पुनरागतो मृगः पाशैर्बद्धोऽचिन्तयत्— 'को मामितः कालपाशादिव व्याधपाशात् त्रातुं मित्रादन्यः समर्थः' । तत्रान्तरे जम्बुकस्तत्रागत्योपस्थितोऽचिन्तयत्— 'फलिता तावदस्माकं कपटप्रबन्धेन मनोरथसिद्धिः । एतस्योत्कृत्यमानस्य मांसासृग्लिप्तान्यस्थीनि मयावश्यं प्राप्तव्यानि । तानि च बाहुल्येन भोजनानि भविष्यन्ति'

मृगो जम्बुकमागतं दृष्ट्वोल्लसितो ब्रूते— 'सखे, छिन्धि तावन्मम बन्धनम् । सत्वरं त्रायस्व माम्' । जम्बुको मुहुर्मुहुः पाशं विलोक्याचिन्तयत्— 'दृढस्तावदयं बन्धः' ब्रूते च 'सखे, स्नायुनिर्मिता एते पाशाः । तदद्य भट्टारकवारे कथमेतान् दन्तैः स्पृशामि । मित्र, यदि चित्तेनान्यथा मन्यसे तदा प्रभाते यत् त्वया वक्तव्यं तत् कर्तव्यम्' । इत्युक्त्वा क्वचिदात्मानमाच्छाद्य स्थितः ।

अनन्तरं स काकः प्रदोषकाले मृगमनागतमवलोक्येतस्ततोऽन्विष्य गतस्तथाविधं दृष्ट्वोवाच— 'सखे, किमेतत्?'। मृगेणोक्तम्— 'सुहृद्वाक्यावधीरणस्य फलमेतत्'। काको ब्रूते— 'स वञ्चकः क्वास्ते?'। मृगेणोक्तम्— 'मांसार्थी तिष्ठत्यत्रैवान्तर्हितः'। काको ब्रूते— 'उक्तमेव मया पूर्वम्'। ततः काको दीर्घं निश्वस्य निजगाद— अरे वञ्चक, किमिदं त्वया पापकर्मणा कृतम्! अथवा स्थितिरियं दुर्जनानाम्॥

अथ प्रभाते क्षेत्रपतिः लगुडहस्तस्तं प्रदेशमागच्छन् काकेनावलोकितः। तमालोक्य काकेनोक्तम्— 'सखे मृग, त्वमात्मानं मृतवत्संदर्श्य वातेनोदरं पूरयित्वा पादान् स्तब्धीकृत्य तिष्ठ। यदाहं शब्दं करोमि तदा त्वमुत्थाय सत्वरं पलायिष्यसे'। मृगस्तथैव काकवचनेन स्थितः। ततः क्षेत्रपतिना हर्षोत्फुल्ललोचनेन तथाविधो मृग आलोकितः। 'आः स्वयं मृतोऽसि' इत्युक्त्वा मृगं बन्धान्मोचयित्वा पाशान् ग्रहीतुं सयत्नो बभूव। ततः काकशब्दं श्रुत्वा मृगः सत्वरमुत्थाय पलायितः। तमुद्दिश्य तेन क्षेत्रपतिना क्षिप्तेन लगुडेन शृगालो हतः।

त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः ।
अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते ॥

## १८. मदोन्मत्तः

पुरा कलिङ्गदेशे मदोन्मत्तो नाम मद्यपानशीलः कश्चित् पुरुष आसीत् । सोऽतीव दरिद्रोऽभूत् । प्रत्यहं कर्मकरणेन याचनेन वा स यत्किञ्चिद्धनं संपाद्य तत्सर्वं मद्यपानाय व्ययीचकार ।

एकस्मिन् दिने स शैत्यबाधितः कर्म कर्तुं भिक्षामटितुं वा नाशक्नोत् । पानेच्छा च व्यवर्धत । ततो जिह्वालौल्येनाकृष्टः स किमपि मद्यगृहमगच्छत् । मद्यगृहस्वामी च तं यथाचारमुपचारवचनैः सत्कृत्य—'अये, किमपेक्षितं भवतः?' इत्यपृच्छत् । 'भवते यद्रोचते तद्दीयताम्' इति मदोन्मत्तः प्रत्यवोचत् । तस्य वचनं श्रुत्वा मद्यगृहस्वामी मूल्यवन्ति वस्तूनि तस्मै ददौ । स च तान्यादाय खादन् पिबंश्च जहर्ष ।

तदनु मदोन्मत्तः कांश्चित् क्षणांस्तत्रैव तस्थौ। ततः शनैर्गृहं प्रति प्रतस्थे। तदा मद्यगृहस्वामी-- 'अये, यत्त्वया पीतं खादितं च तस्य मूल्यं देहि' इत्यवोचत्। मदोन्मत्तः प्रत्युवाच--'अरे किमिदम्। अहं मद्यगृहं द्रष्टुमागतः त्वयैवेमानि वस्तूनि मह्यं दत्तानि। न तु मयाऽपेक्षितानि। मम हस्ते वराटिकापि नास्ति। कुतो वा यत्देयम्' इति। मद्यगृहस्वामी च किमपि कर्तुमपारयंस्तं विससर्ज।

अयं वृत्तान्तस्तस्यां पण्यवीथिकायां सर्वैः परिज्ञातः। अपरेद्युर्मदोन्मत्तस्तस्यामेव वीथिकायामन्यन्मद्यगृहं जगाम। विदिततदाचारश्च तन्मद्यगृहस्वामी कशामेकां वस्त्रान्तर्लीनामानीय मदोन्मत्तं वञ्चयितुकामः सोपचारं— 'अये किमपेक्षितं भवतः?' इत्यन्वयुङ्क्त। मदोन्मत्तः पूर्वेद्युरिव भवते यद्रोचते तद्दीयताम्। इत्यब्रवीत्। तदाकर्ण्य मद्यगृहस्वामी झडिति कशामाकृष्य तं बलवत्ताडयामास। मदोन्मत्तश्च भृशमाक्रोशन् सत्वरं ततः समुत्प्लुत्य सुदूरं पलायितः।

---

## २९. कालिदासस्य गुरुः ।

धाराधीशो भोजराजः परमो दानशौण्ड इति श्रुत्वा कश्चिदकिञ्चनो ब्राह्मणः स्वयमपि द्रविणाशया भोजसभां जगाम । गच्छंश्च पथि यदृच्छया कालिदासेन दृष्टः पृष्टश्च स ब्राह्मणः स्वमनोरथं कथयामास ।

तदाकर्ण्य कालिदासः— 'भो ब्राह्मण, किं भवान् कविराहोस्विच्छास्त्रज्ञः?' इत्यप्राक्षीत् । 'महाभाग, नाहं कविर्नापि शास्त्रज्ञः, किन्तु दरिद्रोऽस्मि । दक्षिणार्थं मया राजान्तिकं गम्यते' इति ब्राह्मणोऽभाणीत् । तच्छ्रुत्वा कालिदास आह— 'आर्य, भोजस्य राज्ञः सभायां कविभ्यः शास्त्रज्ञेभ्यश्च सम्भावना दीयते, न तु ब्राह्मणेभ्यो दक्षिणा । मन्ये तत्र त्वया वराटिकापि न लभ्येत' इति ।

तस्य भाषितं निशम्य विषण्णो ब्राह्मणः— 'महात्मन्, अप्यस्ति कश्चिदुपायो येन भूरि द्रविणं मया राज्ञः सकाशाल्लभ्येत?' इति पप्रच्छ । कालिदास आह— 'अस्त्युपायो यदि मच्छन्दमनुवर्तसे'। ब्राह्मणः

प्रत्यवोचत्— 'बाढं भवदाज्ञामनुवर्ते'।

इत्याभाष्य कालिदासस्तं ब्राह्मणं स्वगृहे समुपवेश्य तस्मिन्नहनि चिरेण राजसभामगमत्। राजा च चिरा-यागतं कालिदासं वीक्ष्य पप्रच्छ— 'महाकवे, कि कृतोऽयं विलम्बः?'। कालिदासोऽवदत्— 'राजन्, वाराणसीतश्चतुश्शास्त्रपारगा मम गुरुपादास्तावदद्य समागताः। तेषां वरिवस्यायां प्रवृत्तस्य ममैतावान् विलम्बः' इति।

हन्त! कालिदासस्यापि गुरुचरणा इति श्रोत्रामृतं वचनम्। अद्धा धन्योऽस्मि इत्याकलय्य राजा— 'महाकवे, परमानन्दतुन्दिलाः स्मः। तेषामिह सन्नि-धानेन वयमात्मानं सभां च कृतकृत्यतां नेतुमभिल-षामः। श्व एव तेषामिहागमनं भवतु' इत्यवोचत्। कालिदासो ब्रवीति— 'राजन्, तेषामिहागमनं दुष्करं पश्यामि। यतस्ते सर्वदैव कर्मानुष्ठाननिरताः क्षणमपि विश्रान्तिं न लभन्ते। अथापि तेषामभिप्रायं ज्ञात्वा भवन्तं निवेदयामि' इति।

ततः कालिदासो गुरोरभिप्रायं जिज्ञासमान इव

गृहं गत्वा सायं प्रत्यागम्य— 'राजन्, यदुक्तं मया तदवितथमेव। अथापि तावत् सनिर्बन्धं मयाभ्यर्थितास्ते श्वः समागमनं प्रत्यपद्यन्त। अथ तु ते कांश्चिदेव निमेषानत्र स्थास्यन्ति। अपि च मितभाषिणस्ते पञ्चषाण्यक्षराणि भाषिष्यन्ते। यत्तैरुच्यते तच्छिरसा वोढव्यम्। न तु तत्रानुयोगः कार्यः' इत्यवादीत्।

तत्सर्वं तथैवेत्यङ्गीकृत्य राजा धन्यमात्मानं मन्यमानः सन्तोषस्य परां काष्ठामधिरूढो माल्यतोरणादिभिः सभामलङ्कारयामास। आकारयामास च धारावास्तव्यान् महाजनान्।

कालिदासोऽपि गृहं गत्वा ब्राह्मणमाहूय— 'त्वामहं श्वो राजान्तिकं नेष्यामि। तत्र च राजानं दृष्ट्वा 'त्रिपीडापरिहारोऽस्तु' इत्येतावदुक्त्वा विष्टरे तूष्णीमासितव्यं त्वया' इत्यवोचत्। ब्राह्मणस्तदुक्तमङ्गीकृत्य सर्वान् व्यापारान् परित्यज्य कालिदासोक्तान्यक्षराणि महता यत्नेन ओष्ठगतान्यकरोत्।

---



## २०. कालिदासस्य गुरुः ।

### [द्वितीयो भागः]

---

अपरेद्युः कालिदासो ब्राह्मणं वेषभूषादिभिः परिष्कृत्य राजसभां प्रतस्थे । ब्राह्मणं च पुरोभागे कृत्वा स्वयं तस्य पृष्ठतो भक्तिमान् शिष्य इव बद्धाञ्जलिर्जगाम ।

राजा च सभाद्वारमागतं ब्राह्मणं सवाद्यघोषमन्तः प्रवेश्य सादरं सत्कृत्य दर्शितविनयस्तस्य पादयोः पपात । ब्राह्मणोऽप्यदृष्टपूर्वाणां राजसभावैभवानां दर्शन

मात्रेण सम्भ्रान्तः कालिदासोक्तां परिपाटीमस्मरन् 'त्रिपीडा अस्तु' इत्युक्त्वा विष्टरे समुपविष्टः ।

तच्छ्रुत्वा राजा परिम्लानवदनः पादपीठीमपश्यत् । सभिकाश्च सर्वे स्मेरमुखा अभूवन् । प्रत्युत्पन्नमतिः कालिदासस्तु समुपस्थितामात्मनो दुरवस्थां परिजिहीर्षन्—'अहह गुरुपादानां वचसः प्रकर्षः । अहो वाग्देवतायाः प्रसादः । अहो महाराजस्य सुकृतम्! इति वदन् नर्तितुमारेभे ।

तदवेक्ष्य राजाब्रवीत्—'कालिदास, तव गुरुपादानां वचसोऽर्थ एव न मया ज्ञातः, किमुत प्रकर्षः । अर्थं तावद्वर्णय' इति । कालिदास आह—'महाराज किं ब्रवीमि । अहह कीदृशं ते भागधेयम् । अहो आचार्याणां त्वयि प्रेमातिशयः । केन वान्येन लभ्येत जगत्यामीदृशमाशीर्वचः । अहो गुरुचरणानां वचसो गाम्भीर्यम् । गुरुचरणानपहाय कस्य वान्यस्य मुखादीदृशं वचनामृतं स्यन्देत । अहो आचार्याणां पाण्डित्यस्य प्रकारः । श्रूयतां तावदस्यार्थः—

आसने त्रिप्रपीडास्तु शिशुपीडास्तु भोजने ।
शयने दारपीडास्तु त्रिपीडास्तु नरेन्द्र ते ॥

इति व्याख्याय— 'राजन्, इतोऽधिकं किमस्ति जनिमता जगत्यभ्यर्थनीयम्। अनेन हि भवान् सर्वासां सम्पदां पात्रीकृतः' इत्याचख्यौ।

तदाकर्ण्य सर्वेऽप्यतिमात्रं चमत्कृताः कालिदासस्य गुरुं साक्षात् सरस्वत्या अवतारममन्यन्त। राजाप्यतितरां तुष्टस्तस्मिन् द्रविणराशिं ववर्ष। कालिदासोऽपि रहस्यभेदभयेन ब्राह्मणं तत्क्षणमेव गृहं नीत्वा रात्रौ निभृतं स्वदेशं प्रेषयामास।

## २१. धनप्रशंसा

यस्यास्ति वित्तं स नरः कुलीनः
    स पण्डितः स श्रुतवान् गुणज्ञः।
स एव वक्ता स च दर्शनीयः
    सर्वे गुणाः काञ्चनमाश्रयन्ते॥ १॥

त्यजन्ति मित्राणि धनैर्विहीनं
   पुत्राश्च दाराश्च सुहृज्जनाश्च ।
तमर्थवन्तं पुनराश्रयन्ति
   धनं हि लोके पुरुषस्य बन्धुः ॥ २ ॥

बुभुक्षितैर्व्याकरणं न भुज्यते
   पिपासितैः काव्यरसो न पीयते ।
न च्छन्दसा केनचिदुद्धृतं कुलं
   हिरण्यमेवार्जय निष्फला गुणाः ॥ ३ ॥

दुन्दुभिस्तु सुतरामचेतन-
   स्तन्मुखादपि धनं धनं धनम् ।
इत्थमेव निनदः प्रवर्तते
   किं पुनर्यदि जनः सचेतनः ॥ ४ ॥

धनैर्निष्कुलीनाः कुलीना भवन्ति
   धनैरापदं मानवा निस्तरन्ति ।
धनेभ्यः परो बान्धवो नास्ति लोके
   धनान्यर्जयध्वं धनान्यर्जयध्वम् ॥ ५ ॥

---



## २२. क्षेत्रकर्षणम् ।

इह क्षेत्रं कृष्यते । इदं शालेयक्षेत्रम् । शालीनामुत्पत्तौ प्रभूतं जलमपेक्ष्यते । तस्माज्जलस्यावस्थानाय क्षेत्राणि परितः सेतवः क्रियन्ते । व्रीह्यादयस्तु नातीव जलमपेक्षन्ते । अतस्ते पर्वतसानुष्वपि समृद्धतया प्ररोहन्ति । शालयस्तु जलमयेषु निम्नप्रदेशेषु केवलमुत्पद्यन्ते ।

चित्रेऽस्मिन् कर्षणाय द्वौ वृषभौ हलस्य धुरि नियुक्तौ दृश्येते । क्वचिन्महिषावपि नियुज्येते । यूरोपखण्डेऽमेरिकाखण्डे च नियमेनाश्वौ बध्येते । अद्यत्वे

कर्षणाय क्वचिद्यन्त्राण्युपयुज्यन्ते । शर्करिलानां निष्कुटादीनामुत्कर्षणार्थमायमानि लाङ्गलान्युपकल्पितानि ।

चित्रमवलोकय । स कर्षको हलस्य पश्चाद्दण्डं हस्तेन धृत्वा हलस्याग्रं भूमौ खनन् वृषभौ नयति । हलस्याग्रभागे निशिताग्रो लोहफालः सङ्घटितः । तेन यदा वृषभौ गच्छतस्तदा हलस्याधस्तात् पञ्चषाङ्गुलखाता पद्धतिर्जायते । सैषा पद्धतिः सीतेत्युच्यते ।

सकृत् कृष्टे क्षेत्रे मृत्तिका न मृदुः भवति । अतो द्विस्त्रिर्वा कर्षणं क्रियते । द्विः कृष्टं क्षेत्रं द्विगुणाकृतमिति त्रिः कृष्टं त्रिगुणाकृतमिति चोच्यते । द्विगुणाकृते त्रिगुणाकृते वा क्षेत्रे बीजान्युप्यन्ते । बीजावापात् परं सकृत् कृष्टं क्षेत्रं फलकाकर्षणेन समीक्रियते । तदा बीजानि मृदन्तः पतितानि त्रिचतुरर्दिनैरङ्कुर्यन्ते । उद्भिन्नाश्च शालयः सकृदुत्खाय प्रतिरोप्यमाणाः प्रभूतानि फलानि वितरन्ति । शालीनां मञ्जर्योऽत्यन्तं मनोहराः । पक्वेलिमाः शालयो लवित्रैर्लूयन्ते ।

सैषा कृषिः देवमातृकायां भूमौ वर्षकाले सकृत् सम्पाद्यते । नदीमातृकायां तु वर्षस्य द्विस्त्रिर्वा क्रियते ।

क्वचिज्जलस्याभ्युक्षणेन कृषिः समुत्पाद्यते । सर्वासु वृत्तिषु कृषिरेव प्रधानतमा । कृषितो नास्ति दुर्भिक्षम् ।

रामायाचय मेदिनीं धनपतेर्बीजं बलाल्लाङ्गलं
प्रेतेशान्महिषं तवास्ति वृषभः फालं त्रिशूलं तव ।
शक्ताहं तव चान्नदानकरणे स्कन्दोऽस्ति गोरक्षणे
खिन्नाहं हर भिक्षया कुरु कृषिं गौरीवचः पातु वः ॥

---

## २३. शतं प्रहाराः ।

---

एकदा गुर्जरदेशीयः कश्चित् कविः काव्यवत्सलं काशीराजं द्रष्टुं काशीदेशमगच्छत् । गत्वा च तत्र राजभवनं प्रविशन् स द्वारे द्वाःस्थेन केनचिन्न्यरुध्यत । सप्रश्रयमनुनीयमानः स द्वास्थः—'यदि त्वमन्तः प्रवेष्टुमिच्छसि तर्हि मह्यं यत्किञ्चिद्देहि । अन्यथा दुर्लभस्ते प्रवेशः' इत्यवोचत् । तच्छ्रुत्वा कविः—'भद्र, अधुना मम हस्ते वराटिकापि न विद्यते । किन्तु राज्ञः सकाशान्मया सम्भावना लभ्येत । तत्र यल्लभ्यते

तस्यार्धं ते दास्यामि' इति प्रत्यवोचत्। तद्वचः श्रुत्वा हृष्टो द्वारपालकस्तं प्रावेशयत्।

ततः कोष्ठान्तरं प्रविशन् स भूयोऽन्येन द्वारपालकेन निवारितः। तस्मा अपि राज्ञः सकाशाल्लभ्यमानस्यार्धं दास्यामीति प्रतिज्ञाय स कविस्तेनाप्यनुमतः कथञ्चित् राज्ञः सविधं प्रापत्। प्राप्य च सरसैः श्लोकैः राजानं तुष्टाव। तेन प्रीतो नरपतिस्तं सत्कृत्य तस्मै वारणमेकं दापयितुं मन्त्रिणमादिक्षत्। तस्य वचनं श्रुत्वा कविराह— 'राजन् अहमसकृल्लब्धवारण एवास्मि। अतोऽद्य तल्लाभेन न मे प्रयोजनम्। तस्मादन्यदेव याचिष्ये। तदानेन ममार्थनां पूरयितुमर्हसि' इति। राजोवाच— 'विद्वन्, किन्तेऽभीष्टम्? कथय। यदि शक्यं तर्हि दास्यामि' इति।

कविरब्रवीत्— 'राजन्, यदि मां सम्भावयितुमिच्छसि तर्हि शतं प्रहारान् मे पारितोषिकत्वेन विधेहि। न ते दातुमशक्यं मया किञ्चित् प्रार्थितम्' इति। राजा कवेराकूतमज्ञात्वा भृशं खिन्नः प्राह— 'महाकवे, त्यज्यतां ते प्रहारकथा। रत्नं हिरण्यं वा यथाभिमतं याचस्व। तत् ते वितरिष्यामि' इति। कविः प्रत्यवो-

चव— 'राजन्, यदि त्वं कवीनां मनोरथस्य पूरक-स्तर्हि शतेन प्रहारैर्मां सम्भावय । नो चेद्गमिष्यामि । स्वस्त्यस्तु ते' इति ।

ततो गत्यन्तरमपश्यन् राजा तदभीष्टस्य पूरणाय वेत्रहस्तं कञ्चुकिनमाज्ञापयामास । कञ्चुकी च यदा तं प्रहर्तुमुद्युक्तोऽभूत् तदा कविः प्राह— 'महाभाग, क्षणं प्रतीक्षस्व । अस्याः सम्भावनाया अंशहरौ द्वौ दौवारिकावासाते । राज्ञः सकाशाल्लभ्यमानस्यैकमर्ध-मेकस्मै, अपरमर्धमपरस्मै च मया प्रतिज्ञातम् । अन्यथा मेऽन्तःप्रवेशो राजदर्शनं च नाभविष्यत् । तस्मादेते शतं प्रहाराः समं विभज्य तयोः पृष्ठे पात्यन्तां, येनाहं कृतप्रतिज्ञः सत्यवचनो भवेयम्' इति । तदनुरोधेन राज्ञः पुरोभागमानीतयोः प्रतीहारयोः पृष्ठभागे पृथक् पञ्चाशत् प्रहाराः प्रदत्ताः । अनेन कवेः कौशलेन राजा मन्त्रिणश्चात्यन्तं चमत्कृतास्तं नितरां बहुमान-यन् ।

---



## २४. अजगरो भिक्षाभाजनं च ।

---

पुरा पाटलिपुत्रे यज्ञसोमः कीर्तिसोमश्चेति द्वौ भ्रातरावास्ताम् । तयोः प्रभूतं पित्र्यं वित्तमभूत् । तौ तद्विभज्य पृथग्गृहिणाववर्तेताम् । तयोः कीर्तिसोमः स्वीयं भागं वाणिज्येन कौसीद्येन चावर्धयत् । यज्ञसोमस्तु स्व-

ज्ञानो ददानश्च स्वीयमंशं कियतैव कालेन व्ययीकृत्य रिक्तीभूतो बन्धूनामवधीरणायाः पात्रमभूत् ।

बन्धुजनैरवमन्यमानः सोऽत्यन्तं खिन्नः स्वभार्यामवोचत्—'प्रिये सम्प्रति निर्धनीभूतयोरावयोः वरमन्यदेशगमनं न त्विह बन्धूनां मध्ये जीवनम् । अतोऽद्यैव देशान्तरं गच्छावः' इति । भार्याब्रवीत्—'नाथ, पाथेयेन विना कथं वा देशान्तरं गमिष्यावः । न किमप्यस्ति गृहे । अतस्ते भ्रातरं गत्वा यत्किञ्चिद्धनं याचस्व' इति ।

तदनुरोधेन यज्ञसोमः कीर्तिसोमस्यान्तिकं प्राप्य तस्मै स्वीयं सङ्कल्पमावेद्य यावत् तं पाथेयमयाचत तावत् तस्य भार्या श्रुततद्वचना ससम्भ्रममागत्य—'अयि नाथ, एतादृशा दरिद्राः प्रत्यहमस्माकं गृहद्वारमाश्रयिष्यन्ति । तेभ्यः कियत् कुतो वा दास्यामः । स्वीयं वित्तं क्षपितवतेऽस्मै दुर्भगाय त्वया वराटिकापि न दातव्या । यदि दास्यसि मम जीवितेन शपे' इत्यब्रवीत् । कीर्तिसोमः भ्रातृस्नेहान्वितोऽपि भार्याभीतः किमप्यदत्वा तं प्राहिणोत् ।

यज्ञसोमो गृहं गत्वा वृत्तान्तमिमं भार्यायै निवेद्य दैवैकशरणः सद्य एव तया सह देशान्तरं प्रति प्रातिष्ठत । गच्छन्तौ च तौ मार्गवशात् किमपि घोरमरण्यं प्रापतुः । शिलाकण्टकाकीर्णे वनवर्त्मनि क्लेशेन व्रजतोस्तयोः यज्ञसोमः केनचिन्महाकायेनाजगरेण न्यगीर्यत ।

तदपेक्ष्य सा बाला सोरस्ताडमुच्चैः क्रन्दन्ती क्षितौ पपात । तां तथा विलपन्तीमवलोक्याजगरः सञ्जातकरुणो मानुषभाषयाऽभाषत— 'शोभने, किमर्थमेवं विलपसि?' इति । साऽवोचत्—'महासत्त्व, कथं न विलपिष्यामि । मम हि भिक्षाभाजनं भवतापहृतम् । कथङ्कारमशरणा प्राणान् धारयिष्यामि' इति ।

तदाकर्ण्याजगरः सपद्येव स्वजठरात् किञ्चित्सुवर्णपात्रमुद्गीर्य तस्यै दत्त्वाब्रवीत्— 'महाभागे, गृह्यतामिदं ते भिक्षापात्रम्' इति । सा तदादाय प्रत्यवोचत्—'महात्मन्, किमनेन मे प्रयोजनम्? को वा स्त्रियै मह्यमस्मिन् भिक्षां प्रदास्यति?' इति ब्रुवती भूयोऽप्युच्चैरक्रन्दत् । ततः सोऽजगरस्तां सान्त्वयन्नाह— 'साध्वि, त्वमिदं पात्रं गृहीत्वा भिक्षार्थं व्रज । यस्ते भिक्षां न दास्यति तस्य शिरः सहस्रधा विशरिष्यते । सत्यमेतद्वचो मम । मास्तु तेऽत्र संशयः' इति ।

तदाकर्ण्य सा— 'भो महासत्त्व, यदि ते वचः सत्यं तर्हि त्वमिदानीं मे भर्तृभिक्षां प्रदेहि' इत्युक्त्वा पात्रं प्रदर्शयत। अजगरोऽपि स्वनाशभयात् यज्ञसोमं जीवन्तमेवोद्गीर्य तस्यै प्रायच्छत्।

अथ सोऽजगरः— 'भो महाभागौ, अहं काञ्चनवेगाख्यो विद्याधरः कस्यचिदृषेः शापेनाजगरत्वमापन्नः। स च शापो मे साध्वीसंवादपर्यन्तोऽभूत्। इदानीमनुगृहीतोऽस्मि तत्रभवत्या' इति वदन् निजं रूपं प्रतिपद्य तत् सुवर्णपात्रं रत्नैरापूर्य ताभ्यां दत्त्वा स्वाभीष्टदेशं गतः। तौ दम्पती च महता हर्षेण तद्रत्नपात्रमादाय स्वदेशमागत्य बन्धूनां प्रीतेः पात्रीभूतौ चिरं न्यवसताम्।

---

## लोकोक्तयः।

हन्त, हस्तगतं माणिक्यमापणे मृग्यते।

अपेयेषु तटाकेषु बहुतरमुदकं भवति।

विषधरवदनाद्विषमन्तरेण किमन्यन्निष्क्रामति।

स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया।

विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्।

# २५. अशोकः ।

क्रिस्तोः पूर्वं २७२ तमवर्षादारभ्य २३२ तमवर्ष-पर्यन्तमशोको नाम बुद्धमतावलम्बी महाराजो भारत-वर्षस्याधिपत्यमवहत् । यः खलु चन्द्रगुप्तमौर्यस्य पौत्रो बिन्दुसारस्य पुत्रश्चासीत् । स एवाशोकवर्धन इत्यपि समाख्यायते । स चेक्ष्वाकुवंशीयः श्रीराम इव प्रजाना-मैहिकमामुष्मिकं च योगक्षेमं व्यचिन्तयत् ।

प्रथमतस्तावदशोकः समरप्रियोऽवर्तत । महदपि स्वीयं राज्यं कलिङ्गदेशस्य विजयेन महत्तरं कर्तुं मतिं बबन्ध । सन्नद्धसहायश्च राज्यावाप्तेः परं द्वादशे वर्षे कलिङ्गानभ्ययुङ्क्त । प्रवृत्तश्च तत्र कलिङ्गाशोकसैन्य-योस्त्रैवार्षिको दारुणः सङ्ग्रामः । तृतीयस्याब्दस्यान्ते जयलक्ष्मीरशोकमशिश्रियत् ।

जितराज्यस्त्वशोकः सशोको जातः । भयानके त-स्मिन् सङ्ग्रामे सहस्रशः प्रातिपक्षीयान् विशसितान् दृष्टवतस्तस्य मनसि महान् शोकः समजनि । अतः सद्य एवायं भूयस्समरोद्यमाद्विरराम । पश्चात्तापाभिभूतश्च

सन्यासमङ्गीकृत्य बुद्धमहर्षेः शान्तान् शुद्धांश्चोपदेशान-न्ववर्तत। अहिंसामेव परमं धर्ममाकलयन् मृगयाविनो-दमप्यहासीत्। आकीटादामर्त्यं सर्वानपि जीवराशीन् स्वीयप्रजात्वेनागणयत्।

सोऽयं राजर्षिः प्रजानां परितोषणे कृतमतिः परस्परं विवदमानानां विविधानां मतानां सामरस्यमुपपादयन् मतभेदमूलकं जनानां मिथो वैरस्यं च परिहरन् प्रजासु मिथः सोदरस्नेहमुदपादयत्। स्वयं बौद्धमतमवलम्बमा-नोऽप्ययं मतान्तराय नाद्रुह्यत्। प्रत्युत स्वस्वधर्मात् प्रमाद्यतो जनानदण्डयत्। सर्वमतस्थानपि समदृष्ट्या-ऽपश्यत्।

अपि चायमशोकमहाराजः स्वीयानां प्रजानामाचा-रस्य प्रत्यवेक्षणाय तासां लोकयात्रासरणेः परिष्करणाय च स्वसाम्राज्ये समन्तादधिकृतान् पुरुषान् न्ययोजयत्। असंस्कृतानां वन्यवर्गाणां शिक्षणाय सर्वत्रोपदेशकान् न्ययुङ्क्त। किञ्चायं भूतदया, शान्तिः, कायचित्तयोः शुद्धिः, मातापित्रादीनां गुरुजनानामादरणमित्यादीन् विषयानधिकृत्य चतुर्दश नियमान् निरमासीत्। तांश्च शिलालेखेष्वर्पयित्वा प्रजानामवधारणाय भारतवर्षे सम-

न्तात् प्रतिष्ठापयामास । येषु खलु केचन शिलालेखाः सम्प्रत्युपलभ्यमानास्तस्य चरितं तदीयं राज्यभारप्रकारं च बोधयन्ति ।

महाराजोऽयं स्वयमेवात्मानं प्रियदर्शिनमाह । तदनुरोधेन च प्रजानां प्रियमाचरन् मनुष्याणामिव मृगाणामपि तत्र तत्र चिकित्सालयानकल्पयत् । पथिकानां विश्रमाय बहुत्र पथिकाश्रमान् निरमापयत् । सर्वत्र पथि कूपतटाकादीनखानयत् । सञ्चारसौकर्याय यथापेक्षं रथ्या अकारयत् । रथ्यानामुभयोः पार्श्वयोश्छायावृक्षानवर्धयत् । आबालवृद्धं प्रजाः सर्वाः परमानन्दमन्वभूवन् ।

अशोकस्त्वेतावतोऽप्युपकारानपर्याप्तान् मन्यमानः स्वयमतृप्त एवासीत् । दुर्लभा एवैतादृशाः प्रजाहितैषिणो राजानः । सर्वथैवायं महाराजः सर्वत्र सर्वदा सर्वेषां राज्ञामनुकरणीयः सर्वेषां जनानामनुस्मरणीयश्च भवति ।



## २६. एकलव्यः ।

पुरा पाण्डवानामास्थाने द्रोणाचार्यो नाम कश्चिद्धनुर्वेदकोविदो बभूव । यः खलु पाण्डवान् कौरवानन्यांश्च क्षत्रियकुमारान् धनुर्विद्यामध्याप्य लोके विश्रुतिमवाप । यं यं सोऽशिक्षयत् स सर्वोऽपि परेषामभ्यधिकोऽभूत् ।

गच्छति काले कदाचिदेकलव्यो नाम निषादकुमारस्तस्माच्छस्त्रविद्यामधिगन्तुमिच्छंस्तस्यान्तिकं प्राप्य विनयान्वितः साष्टाङ्गं प्रणिपत्य स्वाभीष्टं तस्मै व्यजिज्ञपत् । द्रोणाचार्यस्तस्य विनयेन प्रीतोऽपि तस्येच्छां निर्वोढुमक्षमस्तमाह— 'नैषादे, अहं केवलं क्षत्रियकुलोत्पन्नान् शिक्षयामि । त्वं च निषादानां कुले समुत्पन्नः । अतस्ते शिक्षणमशक्यमेव' इति ।

तच्छ्रुत्वा स निषादः सविषादोऽरण्यं प्रत्यगमत् । गत्वा च कुत्रचिदेकान्ते मृण्मयीं द्रोणाचार्यस्य प्रतिकृतिं प्रतिष्ठाप्य तस्याः पुरस्तात् सविनयो भूत्वा स्वयमेव शस्त्रविद्यां पर्यशीलयत् । कियतैव कालेन स बाणस्य सन्धाने मोचने संहरणे च परमं प्रावीण्यमध्यगच्छत् ।

अत्रान्तरे पाण्डवाः कदाचिन्मृगयार्थं तदेवारण्यं प्राविशन् । तैः सहैकः सारमेयोऽप्यवर्तत । धीरः स सारमेयः प्रविष्टमात्र एवोच्चैर्भषन्नितस्ततो धावन्नेकलव्यमभ्यद्रवत् । आस्यं व्यादाय भषतस्तस्य मुखे युगपदेकलव्यः सप्त शरान् प्रेरयामास । स च शरविद्धवदनः

रक्तसिक्ताङ्गः पाण्डवानामभ्यर्णमगच्छत् । पाण्डवाश्च तं तादृगवस्थं दृष्ट्वा सचिन्ता बभूवुः ।

ततस्ते शुना दर्श्यमानमार्गा एकलव्यस्यान्तिकमेत्य बाणप्रयोगे तस्य लोकोत्तरं हस्तलाघवं वीक्ष्य विस्मिताः— 'अये, कस्त्वम्? कस्य शिष्यः? इत्यप्राक्षुः' । सोऽवादीत्— 'आर्याः, अहं निषादाधिपतेर्हिरण्यधनुषः पुत्रस्तत्रभवतो द्रोणाचार्यस्य शिष्यश्चास्मि' इति ।

तदाकर्ण्य पाण्डवास्तस्य शस्त्रविद्यानैपुण्येनात्मन्यवज्ञां कुर्वन्तो गृहं प्रत्यागत्य द्रोणाचार्यं सखेदमवादिषुः— 'आचार्य, वयमेव भवतः शिष्येष्वप्रतिमाः शूरा इत्यसकृदुक्तवता भवता नूनं वञ्चिताः स्मः । यतो ह्यस्ति कश्चिदरण्यैकान्ते शस्त्रविद्यायामस्मानतिशयानो भवतः शिष्यो निषादकुमारः' इति ।

तन्निशम्य द्रोणाचार्यः साश्चर्यहृदयः सद्य एव पाण्डवैः साकं वनमागत्यैकलव्यमपृच्छत्— 'अये, कथं त्वमसि मम शिष्यः?' इति । एकलव्यः सप्रश्रयं प्रणिपत्य प्रत्युवाच— 'आचार्य, अहं तावद्भवन्तमेवानुध्यायन् भवत एव च नैपुण्यमनुचिन्तयन् शस्त्रविद्यां पर्यचैषम् । तस्मात् ते शिष्य एवास्मि' इति ।

द्रोणाचार्योऽब्रवीत्— 'यदि त्वं मम शिष्यस्तर्हि देहि मे गुरुदक्षिणाम्' इति । तस्य वचनं श्रुत्वैकलव्यः परं तुष्टः प्रत्यब्रवीत्— 'आचार्य, असंशयं दातव्या गुरुदक्षिणा । परन्तु यथातृप्ति दातुमिदानीमक्षमोऽस्मि । अथापि मत्सकाशे यदस्ति तदवश्यमेव दास्यामि । विस्रब्धं कथ्यतां यदपेक्षितम्' इति । द्रोणाचार्योऽवदत्— 'यदि तथ्यमुक्तं त्वया तर्हि तव दक्षिणहस्तस्याङ्गुष्ठं मे दक्षिणां कल्पय' इति । एकलव्यो द्रागनक्षरं स्वीयं दक्षिणहस्ताङ्गुष्ठं छित्त्वा सभक्ति द्रोणाचार्याय समर्पयामास ।

निरङ्गुष्ठ एकलव्यस्ततः परं शस्त्रप्रयोगेऽसमर्थो जातः । अथापि स आत्मानमनृणं मन्यमानः सुतरां मुमुदे । पाण्डवाश्च वीतचिन्ता अभूवन् । एकलव्यस्य गुरुभक्तिस्त्रैलोक्येऽप्यश्लाघ्यत ।

---

## २७. भवभूतेः सूक्तयः ॥

---

लौकिकानां हि साधूनामर्थं वागनुवर्तते ।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ॥

शास्त्रे प्रतिष्ठा सहजश्च बोधः
प्रागल्भ्यमभ्यस्तगुणा च वाणी ।
कालानुरोधः प्रतिभानवत्त्व-
मेते गुणाः कामदुघाः क्रियासु ॥

व्यतिषजति पदार्थानान्तरः कोपि हेतु-
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥

वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे
न तु खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा ।
भवति हि पुनर्भूयान् भेदः फलं प्रति तद्यथा
प्रभवति शुचिर्बिम्बग्राहे मणिर्न मृदां चयः ॥

प्रियप्राया वृत्तिर्विनयमसृणो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।
पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं
रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥



॥ श्रीमन्मध्वाचार्यः ॥

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी॥

---

## २८. श्रीमध्वाचार्यः॥

---

अस्ति कर्णाटकेषु 'उडुपि' इति प्रसिद्धं रजतपीठपुरं नाम वैष्णवानां पुण्यक्षेत्रम्। तस्य च नातिदूरवर्तिनि पाजकनाम्नि क्षेत्रे श्रीमान् मध्वाचार्यो जनिमलभत। यो हि ११९९ तमे क्रिस्त्वब्दे विलम्बिनाम्नि संवत्सरे आश्वयुजमासे शुक्लपक्षे दशम्यां तिथौ वेदवतीमध्यगेहभट्टयोः पुत्रत्वेनावततार।

जातस्य च कुमारस्य पिता वासुदेव इति नाम चकार। बाल एवायं कमनीयाभिर्लीलाभिः सर्वस्या अपि जनताया श्चेतांस्याह्लादयामास। समारूढश्च क्रमेण विद्याग्रहणयोग्यं वयः पित्रोपनीतः स सर्वान् वेदान् सर्वाणि शास्त्राणि चाल्पीयसैव कालेन जग्राह।

अधिगताखिलवेदश्च वेदान्ताध्ययनाय रजतपीठपुरेऽनन्तेश्वराभिधं क्षेत्रमधितष्ठिवांसमच्युतप्रेक्षं नाम वेदान्तपारगं यतिवर्यं शरणं प्रापत्। तस्मादद्वैतवेदान्तमधीयानोऽयमाचार्यः प्रतिपदं तत्रानुपपत्तीरुद्भाव्य द्वैतस्यैव सत्यत्वमुपपादयामास। तस्य प्रतिभाशक्त्या तुष्टोऽच्युतप्रेक्षाचार्यस्तस्य 'पूर्णप्रज्ञः' इति नाम कृत्वा लोकानुग्रहाय द्वैतधर्मं जगति प्रचारयितुं तमचोदयत्।

आचार्योऽपि तस्मादेव यतिप्रवरात् सन्यासमङ्गीकृत्य सर्वत्र तीर्थक्षेत्राण्यटन् मधुमयीभिर्भणितिभिः सर्वस्य लोकस्य हृदयान्यादादानः द्वैततत्त्वं सर्वत्र प्रख्यापयामास। मधुरभाषित्वादयमाचार्यः 'मध्वाचार्यः' इति दिगन्तेषु प्रथामवाप। अनन्तरमयं मध्वाचार्यो बदरीं प्राप्य कञ्चित् कालं तत्र निवसन् आनन्दकराणि द्वैतार्थप्रतिपादकानि ग्रन्थरत्नानि प्रणिनाय। तेनासौ 'आनन्दतीर्थः' इत्याख्यामविन्दत। सोऽयमाचार्यः पूर्वैः कृतानि विंशति भाष्याणि खण्डयित्वा ब्रह्मसूत्रग्रन्थस्यैकविंशं भाष्यमभाषिष्ट। भगवद्गीतादीनामपि द्वैतानुगुणमर्थं वर्णयामास।

अथ ततः प्रस्थित आचार्यः सर्वत्र दिक्षु विचरन् प्रतिवादिभयङ्करांस्तार्किकसिंहान् विजित्य 'अनुमानतीर्थः' इति प्रसिद्धिमलभत । ततः पश्चादनन्तशयनं प्राप्तस्तदात्वे यदृच्छया तत्र सङ्गतं विद्याशङ्करं नाम शृङ्गगिरिमठाधिपतिं वादे निर्जित्य तद्देशीयेन महाराजेन सुतरां सम्मानितोऽभूत् ।

सोऽयं श्रीमध्वाचार्यः सांयात्रिकद्वारा द्वारकातः समासादितां विष्णोरवतारभूतस्य श्रीकृष्णस्य प्रतिमां रजतपीठपुरे प्रतिष्ठाप्य तत्पूजार्थमष्टौ शिष्यान् सन्यासिनो नियोजयामास । ते चाष्टौ पश्चादष्टानां मठानामधिपतयोऽभूवन् । ये खल्वष्टौ मठाधिपतयः शिष्यपरम्परयाऽनुवर्तमानाः वर्षद्वयपर्यायक्रमेण श्रीकृष्णमर्चयन्तः द्वैतं प्रचारयन्तश्चाद्य यावदाचार्यस्याज्ञां निर्वहन्ति।

श्रीमदाचार्योऽपि निर्वर्तितात्मकृत्यः पुनरपि बदरीं प्राप्य तत्र शाश्वतिकीं योगासिकामध्यासिष्ट। यस्त्रेतायां श्रीरामस्य बहुतरमुपाकरोत् स एव हनूमान् भगवत्कार्यसाधनाय द्वापरे भीमत्वेन कलौ पूर्णप्रज्ञत्वेन चावतीर्ण इत्याहुः । अत एव श्रीमदाचार्योऽयं मुख्यप्राण इति भीम इति च व्यपदिश्यते ।

## २९. जीर्णधनः श्रेष्ठी च ॥

आसीदयोध्यापुरे जीर्णधनो नाम वणिक्। तस्य पित्र्यं धनं यत्किञ्चिदासीत्। स तत् क्रमशो भोगेन क्षपितवान्। अथ द्रव्यक्षयात् तत्र वस्तुं लज्जमानो देशान्तरं गन्तुं मतिं चक्रे। तस्य गृहे लोहमयी पूर्वपुरुषार्जिता तुला काप्यासीत्। तां स्वमित्रस्य कस्यापि श्रेष्ठिनो गृहे न्यासं कृत्वा देशान्तरं गतः। बहून् वर्षांस्तत्र तत्रोषित्वा पुनः स्वपुरमाजगाम। आगत्य च श्रेष्ठिगृहं गत्वा—'श्रेष्ठिन्, मदीया निक्षेपतुला दीयताम्' इति तं प्रार्थयत।

वञ्चकः श्रेष्ठी तु तां स्वयमपहर्तुमिच्छन् प्राह—'भोः, त्वदीया तुला कस्याञ्चिद्रात्रौ मूषिकभक्षिता। तद्गम्यताम्' इति। तच्छ्रुत्वा धीमान् जीर्णधनश्चिन्तयामास—'न हि लोहमयीं तुलां मूषिका भक्षयितुं शक्नुवन्ति। अन्तः सत्यामेव तुलायामयमेवमसत्यं वदति। अहो अस्य वञ्चकस्य मूर्खतायाः प्रकारः। तत् केनोपायेन तुला मे सुलभा भवेत्? अस्तु, एवं करिष्ये' इति।

अथ जीर्णधनः श्रेष्ठिनमुवाच— 'सुमुख, नास्त्यत्र तवापराधो यदि तुला मूषिकैर्भक्षिता । ईदृश एवायं संसारः । न किमप्यत्र शाश्वतमस्ति । आस्तामेतत् । स्नातुं नदीं गमिष्यामि । तदिमं तव बालं स्नानोपकरणहस्तं मया सह प्रेषय' इति । सोऽपि मूढस्तुलालाभेन नितरां तुष्यन् बालमुवाच— 'वत्स अयं तव पितृव्यः स्नातुं नदीं याति । अनेन सह स्नानोपकरणान्यादाय गच्छ' इति ।

अनन्तरं जीर्णधनस्तेन बालेन सार्धं नदीं जगाम । तत्र स स्नात्वा तं बालं नदीगुहायां सङ्गोप्य तद्द्वारं बृहत्या शिलयाच्छाद्य सत्वरं श्रेष्ठिगृहं गतः । अथ बालमदृष्ट्वा श्रेष्ठी तं पप्रच्छ— 'कुत्र मे बालः ?' इति । स एवं प्रतिवचनं ददौ— 'श्रेष्ठिन्, तव बालं नदीतटे समुपविश्य स्नानमाचरति मयि कोऽपि श्येनः समागत्य बलात् तमपाहरत्' इति । तच्छ्रुत्वा स आह— 'मिथ्यावादिन्, किमेवमसम्भावितं भाषसे । किं क्वचिच्छ्येनो बालमपहरेत् ? समर्पय मे सुतम् । अन्यथा न्यायसभायां निवेदयिष्यामि' इति । जीर्णधनः प्राह— 'श्रेष्ठिन्, यथेच्छं समाचर । किं मया क्रिय-

ताम् । पश्यतो मे तव बालं श्येनोऽपहृत्य डयितः'
इति ।

एवं विवदमानौ द्वावपि न्यायसभां गतौ । तत्र श्रेष्ठी तारस्वरेण प्रोवाच— 'भो न्यायाध्यक्ष, मम शिशुरनेन चोरेणापहृतः' इति । तदाकर्ण्य न्यायाधिपो जीर्णधनं पप्रच्छ— 'भोः किमस्य शिशुस्त्वयापहृतः?' इति । स प्राह— 'राजन्, नाहमस्य शिशुमपाहरम् । किन्तु पश्यतो मे नदीतटादस्य शिशुः श्येनेनापहृतः ?' इति । न्यायाधिपः प्राह— 'भोः, न सत्यमभिहितं भवता । किं श्येनो बालमपहरेत् ?' इति ।

अथ बुद्धिमान् जीर्णधनः प्राह—

न्यासीकृतां लोहतुलां
　　यत्र खादन्ति मूषकाः ।
राजंस्तत्र हरेच्छ्येनो
　　बालकं नात्र संशयः ॥

न्यायाधिपः कथमेतदिति पप्रच्छ । जीर्णधनः सर्वं वृत्तं तस्मै न्यवेदयत् । तदाकर्ण्य न्यायाधिपो जीर्णधनमतीव प्रशशंस । तुलालोभिनं श्रेष्ठिनं च निष्कशतेन दण्डयामास ।



## ३०. आस्तिको नास्तिकश्च ॥

आस्तिकः सुतीर्थो नाम कश्चित् तैर्थयात्रिकः कदाचित् क्वचिदातपक्लान्तः कस्यचिन्न्यग्रोधतरोर्मूले विश्रमायाससाद् । तदा सुकेशो नाम कश्चिन्नास्तिको ग्रामान्तरं जिगमिषुस्तेनैव पथागत्य तत्रैव वटच्छायायां तस्थौ । तत्र तयोरयं सँल्लापः सम्प्रवृत्तः

नास्तिकः— आर्य, कुतस्त्यो भवान्? कुत्र च प्रस्थितः?

आस्तिकः— सौम्य, अहं तावद्दाक्षिणात्यो विप्रः, तीर्थक्षेत्राटनार्थं प्रस्थितः। बहूनि तीर्थानि क्षेत्राणि च मया सन्दृष्टानि। इदानीं वाराणसीं प्रति गम्यते मया।

नास्तिकः— आर्य, किमनेन कायक्लेशेन प्रयोजनम्। नूनमात्मा निरर्थकमायास्यते भवता।

आस्तिकः— अये, अपमृक्तं भवता। अस्ति खल्वीश्वरः सर्वसाक्षी, योऽस्मभ्यं कर्मानुरूपं फलं प्रयच्छति। यश्च खलु सुकृतिनः स्वर्गं दुष्कृतिनो निरयं च प्रापयति। तस्माल्लोकान्तरे सुखमभिलषद्भिरवश्य-मेवानुष्ठेयमीदृशं कर्म।

नास्तिकः— आर्य, अस्तीश्वर इति मुग्धालापोऽयं भवतः। न खल्वीश्वरमभिज्ञाः प्रमाणयन्ति। ईश्वरो नाम कश्चिन्नास्त्येव।

आस्तिकः— शान्तं पापम्। देवानां प्रियेण भवता सह भाषमाणोऽहं मुग्ध एव। अस्तु नमस्ते।

नास्तिकः— आचार्य, मास्म कुप्यः । इदं पृच्छामि— ईश्वरस्य सद्भावे किं मानम् ?

आस्तिकः— त्वमज्ञः । ईश्वरोऽस्तीति श्रुतयः शास्त्राणि चोद्घोषयन्ति ।

नास्तिकः— श्रुतयः शास्त्राणि चोन्मत्तप्रलपितानि । तान्यस्माकमप्रमाणानि ।

आस्तिकः— कुतस्तेषामप्रामाण्यमुच्यते ?

नास्तिकः— तानि ह्यस्माकमदृश्यमानमर्थं प्रतिपादयन्ति । ईश्वरः स्वर्गः नरकं पुण्यं पापं—इमानि को वा विश्वस्यात् ?

आस्तिकः— यद्यस्माकमदृश्यमानं वस्तु नास्तीति ब्रूषे तर्हि यूरोपखण्डे यल्लण्डनपुरं तन्नास्तीति ब्रूमः ।

नास्तिकः—लण्डनपुरमस्तीति पुस्तकेभ्योऽवगच्छामः ।

आस्तिकः— तानि पुस्तकानि भ्रान्तप्रलपितानीति ब्रूमः ।

नास्तिकः— आस्तामेतत् । लण्डनपुरं साक्षात् दृष्ट-

वन्तो जनाः सन्ति । ते कथयन्ति तदस्तीति । तस्मात् तस्य सद्भावः प्रतीयते ।

आस्तिकः— तथैव तत्त्वदृशो योगिनः कथयन्ति— ईश्वरोऽस्तीति । तस्मात् तस्य सद्भावः प्रत्येतव्यः ।

नास्तिकः— दृष्टान्तोऽयं मां व्याकुलयति ।

आस्तिकः— अन्यदपि तावत् कथयामि । अस्य पटस्य कर्ता न त्वया दृष्टः । सोऽस्ति वा न वा?

नास्तिकः— अस्त्येव । अन्यथा हि कथमुत्पद्येतायं पटः ।

आस्तिकः— एवं तर्ह्यवधारय— यथा हि घटपटादीनामुत्पत्तौ कुलालतन्तुवायादयः कर्तारो भवन्ति तथैवास्मान् परितो दृश्यमानानां वृक्षलतादीनामुत्पत्तौ कर्ता कश्चिदपेक्ष्यत एव । स एवेश्वरो नाम ।

नास्तिकः— सन्ति खलु लोके केचिन्निरीश्वरवादिनः । किं ते मूर्खाः?

आस्तिकः— सर्वेऽपीश्वरस्य सद्भावमङ्गीकुर्वन्त्येव

पश्य, क्रैस्तवा महम्मदीयाश्चापि सर्वे सेश्वरवादिन एव ।

नास्तिकः— क्रैस्तवेषु न विद्वांसस्तस्य सद्भावमभ्युपगच्छन्ति ।

आस्तिकः— प्रायः हि भानुवासरे यो देवालयं न याति तादृशः क्रैस्तवो दुर्लभ एव ।

नास्तिकः— आर्य, अस्ति चेदीश्वरः स किं रूपः? कथं च द्रष्टव्यः?

आस्तिकः— प्रश्नः सुकरः, उत्तरं दुष्करम् । अथाप्यवधेहि— ईश्वरः सर्वव्यापी सर्वकर्ता सर्वद्रष्टा सर्वशक्तः सर्वज्ञश्च भवति । स च ज्ञानैकगम्यः । चक्षुर्भ्यां द्रष्टुमशक्य एव ।

नास्तिकः— नानामतीयाः खलु भिन्नभिन्नमीश्वरं प्रतिपादयन्ति । तत्र को वा तथ्य ईश्वरः?

आस्तिकः— साधु पृष्टं त्वया । मतभेदादीश्वरस्य नामानि परं भिद्यन्ते । ईश्वरस्तावदेक एव । तमेव

केचिद्विष्णुरिति, अपरे शिव इति, अन्ये बुद्ध इति चाहुः ।

नास्तिकः— आर्य, अस्ति चेदीश्वरः स मूढः । यतो ह्येतस्मिन्नतिमहति न्यग्रोधपादपेऽत्यल्पानि फलानि, मृणालकोमलायां तनीयस्यां कूष्माण्डलतायामतिमहान्ति फलानि च सृजन्नीश्वरो बालिश एव भवितुमर्हति । (एवमाचक्षाणे तस्मिन्नेकं वटफलं नास्तिकस्य शिरस्यपतत् । तदवलोक्यास्तिकस्तमाह—

आस्तिकः— पाषण्डहतक, विद्धीदानीमीश्वरस्य महिमानम् । न्यग्रोधवृक्षोऽयं छायार्थिभिः पथिकैः पशुभिश्च प्रतिक्षणमाश्रीयते । यद्यस्य फलानीश्वरः कूष्माण्डतुल्यान्यस्रक्ष्यत् तर्हि तेषां फलानां पतनेन बहवः प्राणिनो व्यपत्स्यन्त । तादृश्या विपत्तेः परिरक्षितुं न्यग्रोधवृक्षोऽयं भगवता छायाप्रधानः सृष्टः ।

नास्तिकः— आचार्य, सत्यमुपन्यस्तं भवता । तत्त्वमेव कथयन्ति श्रुतयः शास्त्राणि च । अस्तीश्वरः सर्वज्ञः । सोऽत्यन्तं क्रान्तदर्शी दयालुश्च । तस्यैव

कारुण्येनाहमितः सजीवो व्रजामि । नमो भगवते लोकस्य नियन्त्रे सर्वशक्ताय ।

---

## ३१. राजा कविश्च ।

---

अहं च त्वं च राजेन्द्र
  लोकनाथावुभावपि ।
बहुव्रीहिरहं राजन्
  षष्ठीतत्पुरुषो भवान् ॥ १ ॥

राजंस्त्वत्कीर्तिचन्द्रेण
  तिथयः पूर्णिमाः कृताः ।
मद्गृहाच्च बहिर्याति
  तिथिरेकादशी भयात् ॥ २ ॥

सर्वज्ञ इति लोकोऽयं
  भवन्तं भाषते मृषा ।
पदमेकं न जानीषे
  वक्तुं नास्तीति याचके ॥ ३ ॥

अपूर्वेयं धनुर्विद्या
भवता शिक्षिता कथम् ।
मार्गणौघः समायाति
गुणो याति दिगन्तरम् ॥ ४ ॥

यदस्ति तद्ददासीति
नैतच्चित्रमवैम्यहम् ।
भयं स्वप्नेऽपि ते नास्ति
दत्तं तद्विद्विषां कथम् ? ॥

सर्वदा सर्वदोऽसीति
मिथ्या त्वं कथ्यसे जनैः ।
नारयो लेभिरे पृष्ठं
न वक्षः परयोषितः ॥

यशोदयामण्डितकान्तदेहो
बाल्येऽपि गोपालजनस्य नेता ।
गोमण्डलं पासि बलेन युक्तः
कथं न राजन् पुरुषोत्तमोऽसि ॥

## ३२. शिबिः ।

आसीत् पूर्वमुशीनरेषु धार्मिको दयालुः सत्यसन्धश्च शिबिर्नाम नरपतिः । यः खलु सर्वाणि भूतान्यात्मवत् पश्यन् न केवलं मनुष्यानेव किन्तु पशुपक्ष्यादीनपि प्रेम्णा पर्यपालयत् । इतरेषां प्राणिनां जायमानमुपद्रवमात्मन एवामन्यत ।

श्रूयते च— एकदा कश्चिच्छ्येनो बुभुक्षितः कपोतमेकमन्वधावत् । कपोतोऽपि श्येनाद्भीतो द्रुतं पलायमानः शिबिं राजानं शरणमगच्छत् । राजा च तमभयप्रदानेन सान्त्वयामास । तेन समयेन श्येनोऽपि द्रुतं धावन् राजान्तिकमाजगाम । उवाच च— 'राजन्, बुभुक्षा मामत्यन्तं पीडयति । चिरादिमं कपोतमनुधावन्नस्मि । परं ग्रहीतुं नाशकम् । इदानीं मे मनोरथः फलितः । मुञ्च मे कपोतम्' इति । राजाब्रवीत्— 'विहगोत्तम, अयं तपस्वी कपोतो रक्षार्थं मामुपगतः । शरणागतस्य परिपालनमेव राज्ञः प्रथमो धर्मः । तस्मादिमं न मोक्तुमुत्सहे' इति ।

श्येनोऽवदत्— 'राजन्, यथायं कपोतो रक्षार्थी तथाहमपि भिक्षार्थी त्वामुपपन्नः। शरणागतयोरेकस्याङ्गीकारः अन्यस्य तिरस्कारश्चायुक्तः। अपि च निराहारस्य मे त्रीणि दिनान्यतीतानि। यदि कपोतमिमं न मुञ्चसि तर्ह्यद्यैव मे प्राणा विपत्स्यन्ते। विपन्ने च मयि मम पुत्रा दाराश्चानाथा परिध्वन्ति। तेन ते महाननर्थः स्यात्। अतो बहूनां रक्षणार्थं मुच्यतामयमेकः कपोतः' इति। राजाचष्ट— 'महाभाग, तव तावदन्यदेव भक्ष्यं कल्पयामि। तेन त्वं जीवितं धारयिष्यसि। कपोतश्चायं रक्षितो भविष्यति' इति।

श्येनोऽकथयत्— 'राजन्, कपोतो नाम श्येनानां विधात्रा विहित आहारः। अतः कपोतादन्यैर्वस्तुभिर्न मे प्रयोजनम्' इति। राजाह— 'अयि पतत्रिन्, वृथायं ते निर्बन्धः। मम जीवितस्य व्ययेनाप्यस्य प्राणाः परिरक्षणीया इति धीरो मे निश्चयः। अतः कपोतादन्यदभिमतं वस्तु याचस्व। तत् ते दास्यामि' इति।

श्येन आह— 'राजन्, यदीदृशस्ते निश्चयस्तर्हि मास्तु कपोतस्य त्यागः। तव शरीरस्य दक्षिणभागात्

कपोतप्रमाणं मांसमुत्कृत्य मह्यं देहि । तद्भक्षणेनाहं तृप्तो गमिष्यामि' इति । तच्छ्रुत्वा राजा सन्तुष्टान्तरङ्गो यदि मद्देहमांसेनैकस्य प्राणिनो रक्षणं भविष्यति तर्हि कृतार्थं मे जनुरित्याभाष्य सन्निधे तिष्ठन्त्याः स्वभार्याया मुखे चक्षुः पातयामास ।

राजन्यपुत्री सा साध्वी पत्युराकूतमवगत्य तस्य विशदं यशः पालयितुमिच्छन्ती खड्गमादाय तस्य दक्षिणाङ्गान्येकैकशश्छित्वा मांसमादाय तुलामारोपयत् । यथा यथा मांसमारोपयत तथा तथा कपोतो गुरुतामाच्छेत् । शरीरस्य दक्षिणभागः समग्रोऽप्यवसन्नः । तदानीं राज्ञो वामनयनादेकोऽश्रुबिन्दुः क्षितौ पपात । तदवलोक्य कपोतः— 'राजन्, मांसदाने तवास्ति खेद इत्यश्रुबिन्दुः कथयति । नाहं ते मांसं गृह्णीयाम्' इति वदन् प्रस्थितः ।

राजा ब्रवीति 'महासत्त्व, अन्यथा न मन्तव्यं भवता । तुलायां कपोतपक्षादपि गुरुतरं दृष्ट्वा दक्षिणभागस्येवात्मनोऽपीदानीं परं प्रयोजनं भविष्यतीति चिन्तयतो वामभागस्याविरासीत् प्रमोदः । तेनायं

वामादक्ष्णः सन्तोषबाष्पः समुत्पन्नो न तु शोकबाष्पः । अतः कपोतस्य प्रतिनिधित्वेन मम कृत्स्नं शरीरमेव स्वीक्रियतामिति वदन् स्वयमेव तुलामारुरोह । तस्मिन्नेव क्षणे नभस्तः पुष्पवृष्टिः पपात । देवदुन्दुभयो नेदुः । सर्वे लोकाः साश्चर्या बभूवुः ।

श्येनकपोतावपि दिव्यरूपधरौ भूत्वा-- 'राजन्, आवां वासवानलौ, तव भूतदयां परीक्षितुमागतौ । सत्यं दयालुरेवासि । चिरं विजयस्व' इत्युक्त्वा स्वस्थानमारोहताम् । राजापि देवतानां प्रसादेन सद्य एवाक्षताङ्गो भूत्वा प्रथितयशाश्चिरं राज्यं चकार ।

---

## ३३. महीशूरमहाराजः ॥

अयं महीशूरदेशस्याधिपतिः श्रीमान् कृष्णराजस्तत्रभवतो यशोमात्रावशिष्टस्य श्रीचामराजेन्द्रस्य ज्येष्ठात्मजः । महाराजोऽयं १८८४ तमे क्रिस्त्वब्दे स्वजन्मना वसुमतीमभूषयत् । बाल्ये च तत्तदाचार्यैः साधु शिक्षितोऽयं महाराजो बहुषु विद्यासु प्रावीण्यमभ्यगच्छत् ।



His Highness the Maharaja
Sir Sri KRISHNARAJA WADAIYAR Bahadur G.C.S.I., G.B.E.
Maharaja of Mysore

महाराजस्यास्य जनकः श्रीचामराजेन्द्रः १८९४ तमे क्रिस्तुवर्षे भवितव्यताबलादेकोनत्रिंशे वयसि लोकान्तरमयासीत् । तदनु श्रीकृष्णराजोऽयं १८९५ तमे वर्षे जनवरिमासस्य प्रथमे दिवसे शुभे मुहूर्तेऽभिषिक्तः सिंहासनमारुक्षत् । परन्त्वयं तदात्वे दशवर्षः कुमार आसीत् । अतः षड्वर्षाणि वाणीविलाससन्निधानाख्या तस्य माता तत्प्रतिनिधित्वेन राज्यमकरोत् । महाराजोऽयं १९०२ तमे क्रिस्त्वब्दे प्राप्तवयस्को राज्याधिकारमविन्दत ।

लब्धाधिकारोऽयं महाराजः स्वकौशल्येन सुधिया ममात्यानां साहाय्येन च स्वराज्ये नवनवान् परिष्कारान् विदधानः प्रजानां चेतांसि रञ्जयन् स्वदेशमभ्युन्नतां दशामलम्भयत । धर्मशास्त्रैरुपदिश्यमानान् राजधर्माननुज्जिहानः कालोचितां सरणिमनुवर्तमानश्चायं स्वीयानि कर्माणि सावधानेन चेतसा निर्वहति । अपि च महाराजोऽयं राज्यकार्यविचारार्थं प्रतिष्ठापितायाः प्रजाप्रतिनिधिसभायाश्छन्दमनुरुध्यैव राज्यं करोति । येन प्रजाः पूर्णमनोरथास्तृप्ता भवन्ति ।

महाराजोऽयं प्रजासु विद्यायाः प्रचारे बद्धादरः स्व-

राज्ये स्वतन्त्रां सर्वकलाशालां प्रत्यतिष्ठिपत् । ग्रामे ग्रामे पाठालयान् प्रतिष्ठाप्य बालानां बालिकानां च प्राथमिकविद्याभ्यासं परं परिपोषमनैषीत् । महीशूरदेशेऽस्मिन् क्वाचित् क्वचिन्निर्बन्धविद्याभ्यासोऽपि कृतारम्भो दृश्यते । स्त्रीणां विद्याभ्यासाय पृथक् पाठालयाः परिकल्पिताः । देशेऽस्मिन्नाङ्गलीव गैर्वाण्यपि समुत्कृष्टां पदवीमारोपिता । अत्रैका संस्कृतविद्याशाला महाराजेन सादरं पोष्यमाणा दिने दिने वृद्धिमुपैति । विपुलं धनं व्ययीकृत्य महार्घाः प्राक्तनाः संस्कृतग्रन्थाः सम्मुद्य प्रकाश्यन्ते । नीचवर्गीयाणां शिक्षणेऽपि महान्तं यत्नमादधाति । ते चात्र प्राधान्येन जीवनोपयुक्ता व्यवसायविद्याः शिक्ष्यन्ते । किं बहुनोक्तेन । महीशूरराज्यमिदं विद्याभ्यासविषये भारतवर्षीयाणामितरेषां राज्यानां धुरि प्रतिष्ठामर्हति ।

अपि चायं महाराजः स्वराज्ये तत्र तत्र कुल्यातटाकादीनां निर्माणेन कृषिकर्मण्यतिमात्रं सौकर्यमातनोति । तेनास्मिन् देशे सर्वत्रापि सुभिक्षमेवास्ते दुर्भिक्षं तु दुर्निरीक्षमेव । विद्युच्छक्तेर्व्यवसायोऽप्यस्मिन् देशेऽनन्यसामान्यः समवलोक्यते । ये चान्ये प्रजाहितकारिणः परि-

ष्कारास्ते सर्वेऽपि महीशूरदेशेऽस्मिन् द्रष्टुं शक्याः । इत्थं महाराजोऽयं प्रजाभ्यो गृहीतं बलिं तासामेव भूत्यर्थं सहस्रगुणतयोत्सृजति ।

महाराजानां राज्यावाप्तेः परं पञ्चविंशतितमे वर्षे राजतोत्सवः पञ्चाशत्तमे वर्षे हैमोत्सवः, षष्टितमे वर्षे हैरोत्सवश्च प्रचाल्यते । समनन्तरातीते १९२७ तमे वर्षे महता विभवेन प्रवृत्तो महाराजस्यास्य राजतोत्सवः प्रजाभिराबालवृद्धमथन्दानन्दभरिताभिरभिनन्दितः । सोऽयमुदारचरितो महाराजः प्रजानां भूयो हितमन्विच्छन् भगवतः कारुण्येन हैमहैरमहोत्सवौ चानुभवन् सानन्दश्चिरमेधतामित्याशास्महे ॥

---

## ३४. भारतवर्षम् ॥

---

पुरा भरतनाम्ना चक्रवर्तिना परिपालनादस्य देशस्य भारतवर्षमिति व्यपदेशः सिद्धः । यदधुना 'इण्डिय' इति व्याहरन्ति तदस्य वैदेशिकैः कल्पितं नामधेयम् ।




भारतवर्षमिदं यद्यप्येशियाखण्डस्यैकदेशत्वेन विभक्तं तथाप्यतिविशालतया देशान्तरेभ्यो विश्लिष्टतया च खण्डान्तरत्वेन विभागमर्हति । तदिदं पश्चिमतः सिन्धुनदारबसमुद्राभ्यां, दक्षिणतो भारतमहासागरेण, पूर्वतो

वङ्गाब्धिना, उत्तरतो हिमालयश्रेण्या च परिगतं प्रायेण त्रिकोणाकारं भवति ।

भारतखण्डस्यास्य दैर्घ्यं काश्मीरदेशात् कुमारीपर्यन्तं ९५० क्रोशाः, विस्तारः सिन्धुमुखात् गङ्गामुखपर्यन्तं ९०० क्रोशाश्च भवन्ति । इदं च भारतवर्षं 'आर्यावर्तः' इति 'दक्षिणापथः' इति च द्वेधा विभज्यते । आलेख्यं पश्यत । भारतवर्षस्य मध्यभागे विन्ध्याद्रिः पूर्वापरायतस्तिष्ठति । हिमाद्रेर्विन्ध्याद्रेश्चान्तराले दृश्यमानो भाग आर्यावर्तः । विन्ध्याद्रिमारभ्य दक्षिणतः कुमारीपर्यन्तमायतो भागो दक्षिणापथः ।

आर्यावर्तः प्रायेण समभूभागः । हिमालयादुद्भूय बह्व्यस्तरङ्गिण्यो भूभागेऽस्मिन् प्रवहन्ति । तासु गङ्गाब्रह्मपुत्राभिधाने नद्यौ सिन्धुसंज्ञाख्यो नदश्च प्रधानभूताः । गङ्गासिन्धू हिमाद्रेरुद्भवतः । ब्रह्मपुत्रा तु हिमाचलगतं सुरङ्गामार्गमाश्रित्य तिब्बतदेशात् प्रवहति । आर्यावर्तोऽयं विविधानां पुण्यतीर्थानां पुण्यक्षेत्राणां चायतनत्वात् पुण्यभूमिरित्युच्यते ।

दक्षिणापथः पर्वतैर्नदीभिश्चाकीर्णः सस्याढ्यो देशः। मुम्बापुरादारभ्य कुमारीपर्यन्तं पश्चिमपर्वतावलिः, तत्पूर्वतः पूर्वपर्वतावलिश्च सन्तिष्ठते। पश्चिमपर्वतावलेः पश्चिमतः समुद्रपर्यन्तमायतो भागः परशुरामक्षेत्रमित्याख्यायते। दक्षिणापथेऽस्मिन् प्रधानभूता नद्यः—महानदी गोदावरी कृष्णा कावेरी च। एताः सर्वाः पूर्वसागरमभिधावन्ति।

भारतवर्षमिदं पुरा भरतभगीरथदशरथप्रभृतयस्ततो हर्षाशोकप्रभृतयश्च हैन्दवा राजानः परिपालयामासुः। ततः क्रमेण ग्रीसदेशीयाः पोर्तग्रीसदेशीयाः फ्रान्सदेशीयाश्च जैत्रयात्राप्रसङ्गादभ्येत्य राज्यमिदं स्वायत्तीकर्तुं बहुतरमयतन्त। किन्तु तेषां यत्ना मुधाऽभूवन्। तदनु महम्मदीयाः समेत्य राज्यमिदं कञ्चित्कालमनिभरुः। परन्त्वन्तत इदमाङ्ग्लाधिपतेर्वशमयासीत्। सम्प्रति स एवास्य सार्वभौमः। तस्य शासनमनुरुन्धानाः शताधिका हैन्दवा महम्मदीयाश्च सामन्तास्तत्तद्देशस्याधिपत्यं भजन्ति॥

भारतवर्षेऽस्मिन्नद्यत्वे परश्शतानि नगराणि विद्यन्ते। तेषामष्टसप्ततिर्नगराणि लक्षार्धाधिकैः, एकोनत्रिंशन्नग-

राणि लक्षाधिकैश्च जनैरध्युष्यन्ते । तत्रापि कालिघट्ट-पुरं मुम्बापुरं मद्रपुरं चेति त्रीणि नगराणि प्रधानतमानि । आहत्य भारतवर्षवासिनां जनानां सङ्ख्या २९०,०००,०००.

भारतखण्डेऽस्मिन् प्रधानभूता वृत्तिः कृषिः । अत्र-त्यानां जनानां त्रिषु द्वौ भागौ कृषिकर्मणैव जीविकां निर्वर्तयतः । अत्र प्राधान्येन संवर्ध्यमानानि धान्यानि प्रियङ्गुः शालिर्गोधूमश्च । माषमुद्गादीन्यपि धान्यानि तत्र तत्राभिवर्ध्यन्ते । कार्पासीनीलीप्रभृतयस्तन्तूपयुक्ता ओषधयोऽप्यदभ्रतया प्ररोप्यन्ते । वाणिज्यमपि भारतीयैः साधारण्येनाभ्युपगता वृत्तिः । अथापि नैषा वृत्तिस्तेषां मध्ये लब्धोपचया दृश्यते ।

विविधासु कलास्वपि भारतीयाः प्रावीण्यमभजन्त । वयने सीवने चित्रलेखने शिल्पकलायां च नितरां निपुणा अभुवन् । भारतीयैः पुरा मसृणमसृणान्यंशुकानि निरमायिषत । इतराण्यपि लोकयात्रापेक्षितान्युच्चावचानि वस्तून्युदपादिषत । परन्त्विदानीं विदेशीयानां वस्तूनामभियोगेन भूयस्यो भारतवर्षीयाः वृत्तयः कथावशेषतामगमन् ।

विद्यायां विषये भारतवर्षमिदं खण्डान्तराण्यतिशेते। पुराकल्प एवात्र जना व्युत्पन्नमतयोऽभूवन्। तत्फलत्वेन च तैर्वेदाः शास्त्राणि पुराणानि काव्यान्यन्यानि च विविधानि ग्रन्थरत्नानि विरच्य गुरुशिष्यपरम्परायां पर्यपालिषत। सम्प्रति जगत्युपलभ्यमानेषु ग्रन्थेषु वैदिकग्रन्था एव प्राचीनतमाः। खण्डान्तरेषु पुनः प्राक्कालभवानां ग्रन्थानां वार्तापि नाधिगम्यते। व्याकरणे गणिते ज्योतिषे अश्ववेदे धनुर्वेदे आयुर्वेदे च भारतीया लोकोत्तरं वैचक्षण्यं प्राचकटन्।

किं बहुनोक्तेन। महाधीराणां महोदाराणां महाधियां महात्मनां महर्षीणां महायतीनां महाकवीनां महानदीनां महापर्वतानां महाक्षेत्राणां महानिधीनां सद्गुणानां सत्कर्मणां सदाचाराणां सतां सतीनां चाकरभूतमिदं भारतवर्षं समुत्कृष्टत्वेन गणनीयेषु मातृकादेशेष्वन्यतमं भवति। सैषा भारतभूमिराङ्गलाधिपतेर्मकुटे महार्घो मणिरिव भाभाति॥

जननी जन्मभूमिश्च स्वर्गादपि गरीयसी।

# ३५. पद्यमाला ॥

गुणी गुणं वेत्ति न वेत्ति निर्गुणः
बली बलं वेत्ति न वेत्ति निर्बलः ।
पिको वसन्तस्य गुणं न वायसः
करी च सिंहस्य बलं न मूषिकः ॥ १ ॥

दुर्गस्त्रिकूटः परिखा समुद्रो
रक्षांसि योधा धनदाच्च वित्तम् ।
शास्त्रं च यस्योशनसा प्रणीतं
स रावणो दैववशाद्विपन्नः ॥ २ ॥

यः परस्य विषमं विचिन्तयन्
प्राप्नुयात् स कुमतिः स्वयं हि तत् ।
पूतना हरिवधार्थमागता
प्राप सैव वधमात्मनस्ततः ॥ ३ ॥

सत्सङ्गाद्भवति हि साधुता खलानां
साधूनां न हि खलसङ्गमात् खलत्वम् ।
आमोदं कुसुमभवं मृदेव धत्ते
मृद्गन्धं न हि कुसुमानि धारयन्ति ॥ ४ ॥

विद्यया विमलयाप्यलङ्कृतो
  दुर्जनः सदसि मास्तु कश्चन ।
साक्षरा हि विपरीततां गताः
  केवलं जगति तेऽपि राक्षसाः ॥ ५ ॥

कर्पूरधूलीरचितालवालः
  कस्तूरिकाकुङ्कुमलिप्तदेहः ।
सुवर्णकुम्भैः परिषिच्यमानो
  निजं गुणं मुञ्चति नो पलाण्डुः ॥ ६ ॥

आरम्भगुर्वी क्षयिणी क्रमेण
  लघ्वी पुरा वृद्धिमुपैति पश्चात् ।
दिनस्य पूर्वार्धपरार्धभिन्ना
  छायेव मैत्री खल सज्जनानाम् ॥ ७ ॥

मृगा मृगैः सङ्गमनुव्रजन्ति
  गावश्च गोभिस्तुरगास्तुरङ्गैः ।
मूर्खाश्च मूर्खैः सुधियः सुधीभिः
  समानशीलव्यसनेषु सख्यम् ॥ ८ ॥

रत्नैर्महार्घैस्तुतुषुर्न देवा
  न भेजिरे भीमविषेण भीतिम् ।

सुधां विना न प्रययुर्विरामं
न निश्चितार्थाद्विरमन्ति धीराः ॥ ९ ॥

अद्यापि नोज्झति हरः किल कालकूटं
कूर्मो बिभर्ति धरणीं खलु पृष्ठभागे ।
अम्भोनिधिर्वहति दुस्तरवाडवाग्नि-
मङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ १० ॥

प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमजना न परित्यजन्ति ॥ ११ ॥

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेच्छम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥

पद्माकरं दिनकरो विकचं करोति
चन्द्रो विकासयति कैरवचक्रवालम् ।
नाभ्यर्थितो जलधरोऽपि जलं ददाति
सन्तः स्वयं परहिते विहिताभियोगाः ॥ १३ ॥

सर्पाः पिबन्ति पवनं न च दुर्बलास्ते
शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति ।
कन्दैः फलैर्मुनिवराः क्षपयन्ति कालं
सन्तोष एव पुरुषस्य परं निधानम् ॥ १४ ॥

तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः
सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनान् ।
मान्यान् मानय विद्विषोऽप्यनुनय प्रच्छादय स्वान् गुणान्
कीर्तिं पालय दुःखिते कुरु दयामेतत्सतां लक्षणम् ॥

कस्त्वं भद्र खलेश्वरोऽहमिह किं घोरे वने स्थीयते ?
शार्दूलादिभिरेव हिंस्रपशुभिः खाद्योऽहमित्याशया ।
कस्मात् कष्टमिदं त्वया व्यवसितं ? मद्देहमांसाशिनः
प्रत्युत्पन्ननृमांसभक्षणधियस्ते घ्नन्तु सर्वानिति ॥१६॥

विप्रास्मिन् नगरे महान् कथय कः ? तालद्रुमाणां गणः
को दाता ? रजको ददाति वसनं प्रातर्गृहीत्वा निशि ।
को विद्वान् परवित्तवञ्चनविधौ सर्वेऽपि विद्वज्जनाः
कस्माज्जीवसि हे सखे ? विषकृमिन्यायेन जीवाम्यहम् ॥

कस्त्वं वानर रामराजभवने लेखार्थसंवाहकः
प्राप्तः कुत्र पुरागतः स हनुमान्निर्दग्धलङ्कापुरः ।
बद्धो राक्षससूनुनेति कपिभिः सन्ताडितो भर्त्सितः
स व्रीडात्तपराभवो वनमृगः कुत्रेति न ज्ञायते ॥

क्व तिष्ठतस्ते पितरौ ममेवेत-
त्यपर्णयोक्ते परिहासपूर्वम् ।
क्व वा ममेव श्वशुरौ तवेति
तामीरयन् सस्मितमीश्वरोऽव्यात् ॥ १९ ॥

कथयत कथमेषा मेनया विप्रदत्ता
शिव शिव गिरिपुत्री वृद्धकापालिकाय ।
इति वदति पुरन्ध्रीमण्डले सिद्धिलेश-
व्ययकृतवरवेषः पातु वः श्रीमहेशः ॥ २० ॥

कस्त्वं शूली मृगय भिषजं नीलकण्ठः प्रियेऽहं
केकामेकां कुरु पशुपतिर्नैव दृश्ये विषाणे ।
स्थाणुर्मुग्धे न वदति तरुर्जीवितेशः शिवाया
गच्छाटव्यामिति हतवचाः पातु वश्चन्द्रचूडः ॥ २१ ॥

हे हेरम्ब किमम्ब रोदिषि कथं कर्णौ लुठत्यग्निभूः
किं ते स्कन्द विचेष्टितं मम पुरा सङ्ख्या कृता चक्षुषाम् ।
नैतत्तेऽप्युचितं गजास्य चरितं नासां मिमीतेऽम्ब मे
तावेवं सहसा विलोक्य हसितव्यग्रा शिवा पातु वः ॥

अम्बा कुप्यति तात मूर्धनि धृता गङ्गेयमुत्सृज्यतां
विद्वन् षण्मुख का गतिर्मयि चिरं तस्याः स्थितायाः वद ।
रोषावेशवशादशेषवदनैः प्रत्युत्तरं दत्तवा-
नम्भोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः ॥

किं गोत्रं किमु जीवनं किमु धनं का जन्मभूः किं वयः
किं चारित्र्यममुष्य के सहचराः के वंशजाः प्राक्तनाः ।
का माता जनकः शिवस्य क इति प्रह्वेण पृथ्वीभृता
पृष्टाः सस्मितनम्रमूकवदनाः सप्तर्षयः पान्तु वः ॥

लोले ब्रूहि कपालिकामिनि पिता कस्ते पतिः ? पाथसां
कः प्रत्येति जलादपत्यजननं ? प्रत्येति यः प्रस्तरात् ।
इत्थं पर्वतसिन्धुराजसुतयोराकर्ण्य वाक्चातुरीं
संस्मेरस्य हरेर्हरस्य च मुदो निघ्नन्तु विघ्नं तु वः ॥

भिक्षार्थी स क्व यातः सुतनु बलिमखे ताण्डवं क्वाद्य भद्रे
मन्ये वृन्दावनान्ते क्व नु स मृगशिशुर्नैव जाने वराहम् ।
बाले कच्चिन्न दृष्टो जरठवृषपतिर्गोप एवास्य वेत्ता
लीलासँल्लाप इत्थं जलनिधिहिमवत्कन्ययोस्त्रायतां वः ॥

कोऽयं द्वारि हरिः प्रयाह्युपवनं शाखामृगस्यात्र किं
कृष्णोऽहं दयिते बिभेमि सुतरां कृष्णादहं वानरात् ।
राधेऽहं मधुसूदनो व्रज लतां तामेव पुष्पान्विता-
मित्थं निर्वचनीकृतो दयितया ह्रीणो हरिः पातु वः ॥

अङ्गुल्या कः कवाटं प्रहरति
कुटिले माधवः किं वसन्तो
नो चक्री किं कुलालो न हि
धरणिधरः किं द्विजिह्वः फणीन्द्रः ।
नाहं घोराहिमर्दी किमुत
खगपतिः नो हरिः किं कपीन्द्रः
इत्येवं सत्यभामाप्रतिवचन-
जितः पातु वश्चक्रपाणिः ॥ २८ ॥

कृष्णेनाम्ब गतेन रन्तुमसकृन्मृद्भक्षिता स्वेच्छया
  सत्यं कृष्ण क एवमाह मुसली मिथ्याम्ब पश्याननम् ।
व्यादेहीति विकासिते च वदने दृष्ट्वा समस्तं जग-
  न्माता यस्य जगाम विस्मयपदं पायात्स वः श्रीपतिः ॥

वेदानुद्धरते जगन्निवहते भूगोलमुद्बिभ्रते
  दैत्यं दारयते बलिं छलयते क्षत्रक्षयं कुर्वते ।
पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते
  म्लेच्छान्मूर्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः ॥



# शब्दमञ्जरी ।

**(अव्यय, समासप्रकरण, धातुमालिकासहिता).**

A New and exhaustive Edition
with very useful Foot-notes.

*Approved By the Madras, Mysore and Cochin Text-Book Committees.*

Review in the Mysore Maharajah's Sanskrit-College Magazine :—

पण्डितवरैः P. S. अनन्तनारायणशास्त्रिभिर्विरचिताऽसौ शब्दमञ्जरी क्रमशः सामान्य कष्टतर कष्टतम शब्दरूपाभ्यासविषये बालकानामतीवानुकूल्यं परिपोषयति । अस्यां चाधोभागे प्रायशः सर्वत्रोपपादिता व्याकरणांशादिविशेषविषयाः आधुनिकानां गीर्वाणभाषाभ्यासकुतुकिनां विद्यार्थिनामतीव साहाय्यकारिण उत्साहजनकाश्च । व्याख्याताश्चास्या अन्त्यभागे तिङन्तसमासप्रकरणादिकाः तत्तदंशेषु विद्यार्थिनां सुमुखं तत्तद्ज्ञानादिकमुत्पादयन्ति येन च भाषान्तरीयतादृशविषया अपि सुविशदमनायासेन तैर्विज्ञेया भवन्ति । अस्यां च विवृताः सर्वेऽपि शब्दाः यत्किंचिद्वैलक्षण्यमापन्नाः सर्वास्वपि विभक्तिषु प्रायेण प्रदर्शिता इत्ययमप्यंशोऽध्येतृणामत्यानुकूल्याधायकः । तस्मादेवं सौख्यापादनपुरस्सरं भाषाज्ञानोपयोगिनीयं शब्दमञ्जरी गीर्वाणभाषाध्येतृभिः सादरं यद्यभ्यस्यते तदा ते सर्वेऽपि समधिगतमनोरथाः सम्पद्यन्त इतीयं सर्वैश्लाघनीया ।

| | | | |
|---|---|---|---|
| Neatly got up on Good Glazed Paper | | Price | 0–6–0 |
| Do. | Ordinary Edition | ,, | 0–5–0 |

R. SUBRAHMANYA VADHYAR,
Book-Seller & Publisher,
KALPATHY-PALGHAT